# सांख्यदर्शनम्

## ब्रह्ममुनिभाष्योपेतम्



स्वामी ब्रह्ममुनिः परिव्राजकः

# विषयसूचिः

## अस्य ग्रन्थस्य प्रतिपाद्यविषयनिष्कर्षः

प्रकृतिपुरुषयोरविवेकनिमित्तकः स्वस्वामिभावः पुरुषस्य बन्धकारणम् । ईश्वरस्य योगिप्रत्यक्षत्वं सर्वज्ञत्वं सर्वकर्तृत्वं प्रकृतेः कार्यरूपे परिणमयितृत्वं सच्चिदानन्दस्वरूपत्वं च । जीवात्मनः कर्मकर्तृत्वं तत्फलभोक्तृत्वमथ च तत्कर्तृत्वं नेश्वराधीनं भोक्तृत्वं तु कर्मापेक्षमीश्वराधीनम्, तस्यापवर्गार्थप्रवृत्तिमत्त्वमपवर्गभागित्वं चेतनस्वरूपत्वं स्वतो नानन्दरूपत्वं देहादिभ्योऽतिरिक्तत्वं बहुत्वं च । प्रकृतेराद्यं जगदुपादानकारणत्वं सर्वोपादानत्वं चाथानपवर्गभागित्वं सद्रूपत्वं च । जगतोऽभिव्यक्तिवादः सत्कार्यवादश्च । मोक्षोपदेशाय सर्वजनानामधिकारित्वम्, मुक्तेर्दुःखनिवृत्तिरूपत्वेऽप्यानन्दाविरोधित्वम् । वेदानामपौरुषेयत्वम् ।

## अध्यायानां प्रमुखविषयाः

### प्रथमाध्यायस्य—

त्रिविधदुःखात्यन्तनिवृत्तिरूपमोक्षस्यात्यन्तपुरुषार्थतया प्रस्तवनं तत्प्राप्तये दृष्टसाधनस्यायोग्यत्वम्, बन्धस्यास्वाभाविकत्वं तत्र विविधवादेष्वभिमतस्य निरसनम् । बन्धस्य कारणं प्रकृतिपुरुषसंयोगः सोऽपि प्रकृतेः परतन्त्रत्वात् पुरुषस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वादविवेकनिमित्तकः, अविवेकनाशाय विवेकस्य प्रतिनियतकारणत्वम् । प्रकृतिविकृतिस्वरूपवर्णनं प्रकृतेर्जगदुपादानत्वम् । सत्त्वादिगुणानां तद्वतां च साधर्म्यवैधर्म्ये, कार्यस्य लक्षणम् । प्रकृतिपुरुषबोधार्थं प्रमाणप्रदर्शनं । ईश्वरस्य योगिप्रत्यक्षत्वं प्रकृतिसन्निधानात् सृष्टिकर्तृत्वम् । जीवात्मनो भोक्तृत्वं कर्तृत्वं त्रिगुणरहितत्वं शरीरादिभ्यो व्यतिरिक्तत्वं चेतनत्वं बहुत्वं स्वभावतो बद्धत्वमुक्तत्वराहित्यं मुक्तेः पुनरावृत्तिः ।

### द्वितीयाध्यायस्य—

विरक्तमोक्षार्थमविरक्तभोगार्थं प्रकृतेः कर्तृत्वमीश्वराधिष्ठितम्, प्रकृतितः कार्यविधानात् पुरुषविशेषस्येश्वरस्य सृष्टिकर्तृत्वम् । महत्तत्त्वादीनि पञ्चतन्मात्रपर्यन्तानि जीवात्मनः करणसम्पादनार्थानि, करणानां त्रयोदशविधत्वम् । इन्द्रियाणामतीन्द्रियत्वं वृत्तिमत्त्वं च, मनसस्तत्रैकादशत्वं सर्वेन्द्रियेषु प्रधानत्वं च, अन्तःकरणगणे बुद्धेः प्राधान्यम् ।

तृतीयाध्यायस्य—

सूक्ष्मशरीरस्य यावद्विवेकं प्रवर्तमानत्वं देहान्तरे जीवात्मनः संसरणार्थं भोगानुभूतिनिमित्तत्वं च। स्थूलशरीरस्य मातापितृजत्वं भोगायतनत्वं तत्र पञ्चभूतानामवष्टम्भकत्वात् पाञ्चभौतिकत्वं च। देहे चैतन्यस्यादेहजत्वमभूतजन्यत्वं च। प्रकृतेरीश्वराधीनत्वम्, ईश्वरस्य सर्वज्ञत्वं सर्वकर्तृत्वं च, पुरुषस्यापवर्गभागित्वं प्रकृतेर्न, जीवन्मुक्तवर्णनम्।

चतुर्थाध्यायस्य—

मोक्षोपदेशाय सर्वजनाधिकारः, मोक्षार्थं त्यागवैराग्यसंयमादीनामनिवार्यानुष्ठेयत्वम्, अयोग्यवृत्तस्याचिन्तनम्।

पञ्चमाध्यायस्य—

अहिंसादिव्रतानां श्रेयःफलत्वम्, ईश्वरस्य जीवात्मभ्यस्तत्कर्मापेक्षं फलप्रदातृत्वम् वेदानां निजशक्तिव्युत्पत्त्याऽर्थान्वितत्वं तथा तेषामपौरुषेयत्वं च। असत्ख्यातेः सत्ख्यातेरनिर्वचनीयख्यातेरन्यथाख्यातेश्च निरसनं सदसत्ख्यातेरङ्गीकरणम्। जगतोऽभिव्यक्तिवादस्य सत्कार्यवादस्य सिद्धान्ततया प्रतिपादनम्। परमात्मनः प्रकृतिजीवात्मभ्यां पृथक्सत्ताप्रतिपादनम्, प्रत्यक्षप्रमाणस्य रूपनिमित्तत्वप्रतिबन्धनिषेधः। संज्ञासंज्ञिनैसर्गिकसमवायाख्यानां सम्बन्धानां वस्त्वन्तरत्वनिषेधः। सूक्ष्मशरीरसिद्धिः, इन्द्रियाणां प्रसरणशीलवृत्तिमत्त्वं तद्वृत्तेर्भागगुणाभ्यामतिरिक्तत्वं च। शरीरस्य षाड्विध्यं सर्वत्र पृथिव्युपादानत्वं जीवात्मप्रवेशापेक्षः शरीरनिर्माणप्रारम्भः, समाधिसुषुप्तिमोक्षेषु जीवात्मनो भोक्तृत्वाभावो ब्रह्मसदृशभावश्च, तत्र समाधिप्रभृतिषु मोक्षस्योत्कृष्टतमत्वम्। वृक्षेषु जीवप्रसङ्गस्तत्र जीवानां भोगानुभूतिश्चान्तर्बुद्ध्या, वृक्षेषु यात्रिभूतानामनुशयिनां जीवानां भोगाभावः, परशरीराविष्टानां योगिनां तत्र परशरीरेषु भोगकर्माभावः।

षष्ठाध्यायस्य—

आत्मनो देहादिभ्यो भिन्नत्वं तथाहङ्कारयुक्तस्य जीवत्वं जीवात्मनः कर्मकरणार्थं नेश्वराधीनत्वम्. पुरुषबहुत्वं नोपाधिनिमित्तम्। जीवात्मनां कर्मवैविध्यहेतुकं सृष्टिवैविध्यं जगतो वस्तुत्वं प्रकृतेरेवाद्योपादानत्वं सर्वश्रेष्ठम्। मुक्तौ दुःखनिवृत्तेरनन्तरं सुखप्राप्तेश्च पुरुषार्थद्वैविध्यम्, मुक्तावानन्दप्राप्तिमन्तव्यमपि मन्दानां दार्ढ्यार्थं युक्तम्, मुक्तिप्राप्तये श्रवणचतुष्टयस्यानिवार्यसाधनत्वम्। प्रकृतिपुरुषयोः स्वस्वामिभावोऽविवेकनिमित्तकः, अविवेकनाशात् पुरुषार्थस्य मोक्षस्य सिद्धिः।

# प्रमुखविषयाणां प्रमुखसूत्रसूचिः

अभिमानोऽहङ्कारः २.१६
उभयात्मकं मनः २.२६
न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वास्यादिवच्चक्षुरादिवत् ५.६६

इन्द्रियाणामाहङ्कारिकत्वमतीन्द्रियत्वं वृत्तिमत्त्वं च—

आहङ्कारिकत्वश्रुतेर्न भौतिकानि २.२०
अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने २.२३
क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः २.३२
भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पति ५.१०७

## शरीरम्

न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ५.१०३
सप्तदशैकं लिङ्गम् ३.९
अणुपरिमाणं तत्कृतिश्रुतेः ३.१४
आविवेकाच्च प्रवर्तनमविशेषाणाम् ३.४
तद्बीजात् संसृतिः ३.३, (३.१६)
पाञ्चभौतिको देहः ३.१७
सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ५.११२
भोक्तुरधिष्ठानाद् भोगायतननिर्माणमन्यथापूतिभावप्रसक्तिः ५.११४
त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ६.१२४
न किञ्चिदप्यनुशयिनः ६.१२५

## प्रकृतिः

प्रकृतेः स्वरूपं त्रिगुणमयत्वम्—

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः १.६१
सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ३.३९

प्रकृतेर्जगदुपादानत्वं तच्चाद्यम्—

प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्० १.६१
प्रकृतेराद्योपादानतान्येषां कार्यत्वश्रुतेः ६.३२ (१७८)

## सृष्टिः

तन्मात्राणां सूक्ष्मभूतानां तृतीयविकृतित्वमनित्यत्वं च—

प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राणि ... १.६१
अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ५.९१

सृष्टेरभिव्यक्तिवादः सत्कार्यवादो वा—

नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ १.१२०
उत्पत्तिवद्वाऽदोषः १.१२३
पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ५.५९
सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ५.६०

जगतोऽवस्तुत्वनिषेधः—

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् १.७९–५.५२

## सत्त्वादिगुणाः

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः १.६१
सत्त्वादानामतद्धर्मत्वं तद्रूपत्वात् ६.३९

सत्त्वादीनां कारणगुणानां पारस्परिकप्रवर्तनम्—

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् १.१२७

# अनिरुद्धवृत्तिविज्ञानभिक्षुभाष्ययोरा-लोचनान्वितानि सूत्राणि





# परिचयः

नानाशास्त्रनिष्णातेन विपश्चिद्वरेण्येनानेकग्रन्थप्रणेत्रा श्रीमता स्वामिब्रह्ममुनिमहोदयेन विरचितमिदं सांख्यदर्शनभाष्यं मया सम्यगनुशीलितम् । अनिरुद्ध-विज्ञानभिक्षुप्रभृतीनां विदुषां भाष्यकाराणां मते सांख्यस्येश्वरप्रतिषेधपरत्वाद् योगदर्शनवत् 'सेश्वरं सांख्यम्' 'निरीश्वरञ्च सांख्यम्' इति द्वयी प्रथितिरजायत । समानतन्त्रत्वाच्चानयोर्दर्शनयोर्न्यायवैशेषिकवदीश्वरप्रतिपादनं स्वाभाविकमेव, परं सङ्गतिविनिगमनानर्हा एते सांख्यं निरीश्वरं जुघुषुः । 'ईशावास्यमिदं सर्वम्' इत्याद्यासु श्रुतिषु पदे-पदे ब्रह्मसद्भावप्रतिपादनपरस्य वेदस्य प्रामाण्यमभ्युपगच्छन् महर्षिः कपिलो निरीश्वरः कथं सम्भवेत् ? परमस्य दर्शनस्येश्वरविरुद्धैर्भाष्यकाराणां व्याख्यानैर्जना एतत्प्रवादपङ्कप्रसक्ताः पर्यसीदन्त । अद्य स्वामी ब्रह्ममुनिरेतद्भाष्यद्वारा निबिडग्रन्थिं विश्लिष्य लोकानस्मात्प्रवादपङ्कादुद्धृतवानिति महान् हर्षावसरोऽयम् । अत्र युक्तिप्रमाणाभ्यां स्वरसङ्गतिपुरस्सरं तैरेव कापिलैः सूत्रैरीश्वरसत्ता संसाधिता ।

सांख्ये "निराशः सुखी पिङ्गलावत्" इत्यादिव्यावहारिकदृष्टान्तोपन्यासपूर्वकमनेके सिद्धान्ताः विश्कलिताः, स्वामिब्रह्ममुनिनैतादृशानां दृष्टान्तानां सारसमन्वितोऽर्थस्तथा व्यक्तीकृतो यद् दृष्टान्तद्वारेण दार्ष्टान्तिकसिद्धिः स्वाभाविकी खल्वभासते । भाष्येऽर्थाः सूत्रानुसारिणः स्पष्टाश्च, सूत्रसङ्गतिश्चापि सर्वथोपपन्ना । केषाञ्चिद्विदुषां मते सांख्यदर्शनमीश्वरकृष्णकृतकारितोऽप्यर्वाचीनम् । परमिदं प्रस्तुतं भाष्यमेतां धारणामवधीर्य प्राचीनतापक्षं सम्पोषयति ।

इत्थं स्वामी ब्रह्ममुनिर्हि स्वलक्ष्यसाधने सम्यक्सफल इति वचनमुचितमेव प्रतिभाति ।

आत्मानन्दः सरस्वती*

१४-९-५५

---

* परिचयस्य लेखकाः स्वामिप्रवराः श्रीमन्त आत्मानन्दसरस्वतीमहोदयाः । एते महाविद्वांसो दर्शनविद्याभास्कराः साम्प्रतं श्रीदयानन्दोपदेशकमहाविद्यालयस्याचार्यपदमलङ्कुर्वते । —स्वामी ब्रह्ममुनिः

# धन्यवादः

यैर्महानुभावैरस्मिन्सांख्यदर्शनभाष्यप्रकाशने स्वधर्मोपार्जितवित्तेन सहायता दत्ता ते भूरिधन्यवादार्हाः ।❀

## सहायता प्रदाताओं की सूची—

| | |
|---|---|
| ❀ आर्य प्रतिनिधि सभा पंजाब | ४००) |
| श्रीयुत ला० मेलाराम जी २ कीलिंग रोड, नई दिल्ली | २००) |
| ,, विजयकुमार जी ठेकेदार १७ बारह खम्बा रोड, नई दिल्ली | १५०) |
| ,, रावसाहब पूर्णचन्द जी इञ्जीनियर २१ पण्डारा रोड नई दिल्ली | १०१) |
| ,, ठाकुरदास जी पृथवीचन्द जी 'ठाकुर भ्राता' लोअर बाजार शिमला | १०१) |
| ,, श्रीमती धर्मपत्नी श्री ला० नारायणदत्त जी ठेकेदार १३ बारह खम्बा रोड नई दिल्ली | १००) |
| श्रीयुत हंसराज जी गुप्त २० बारह खम्बा रोड, नई दिल्ली | १००) |
| ,, हरप्रकाश जी मन्त्री आर्य वानप्रस्थाश्रम ज्वालापुर | १००) |
| आर्य समाज दीवान हाल | १००) |
| श्रीयुत महाशय कृष्ण जी अध्यक्ष 'दैनिक प्रताप' ६ कीलिंग रोड नई दिल्ली | ५१) |
| ,, राजकुमार कुँवर रणञ्जयसिंह जी रामनगर (अमेठी) | ५०) |
| ,, प्यारेलाल जी (गेन्दामल हेमराज शिमला तथा आर्य समाज परागपुर (कांगड़ा। द्वारा (ठाकुर भ्राता मिमला) | ५०) |
| ,, रणवीर जी अध्यक्ष 'दैनिक मिलाप' नई दिल्ली | ५०) |
| ,, आर्य समाज लोधी रोड नई दिल्ली | ५०) |
| ,, आर्य वानप्रस्थाश्रम वासी महात्मगण (द्वारा श्री मन्त्री हरप्रकाशजी) | ५०) |

उत्तरप्रदेश राज्य शासनसत्ता का भी हम हार्दिक धन्यवाद करते हैं, गत वर्ष हमारे 'वेदान्त दर्शनं ब्रह्ममुनिभाष्योपेतम्' पर पुरस्कार दिया है इस प्रकार संस्कृत के लेखकों को प्रोत्साहन देने का यह कार्य प्रशंसनीय है।



# प्राक्कथनम्

प्रसिद्धं ह्येतद् यत् सांख्यशास्त्रस्य प्रबन्धत्रयम्। तत्र तत्त्वसमासः सर्वपुरातन उच्यते तदनु पञ्चशिखसूत्राणि पश्चाच्च सांख्यकारिका। उक्तं यथा—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि॥
(सांख्यकारिका ७०,७१)

यदिदं सांख्यदर्शनमुपलभ्यते तत् किल कापिलं यद्वा पञ्चशिखप्रणीतं किंवाऽन्यरचितमित्यत्रास्ति विवादः। अनिरुद्धस्तु कापिलं मन्यते "परमकारुणिकः महामुनिः जगदुद्दिधीर्षुः कपिलो मोक्षशास्त्रमारभमाणः प्रथमं सूत्रं चकार—अथ त्रिविधदुःख…" (अनिरुद्धवृत्तिः) तिष्ठतु विवाद एष ऐतिहासिकेषु विद्वत्सु, परन्तूपलभ्यमाने सांख्यदर्शनेऽस्मिन् कपिलसिद्धान्तानां वर्तमानत्वात् कापिलमिति तु वक्तुं मन्तुं च युज्यते हि। यत् खलु "न वयं षट्पदार्थ[ादि]वादिनो वैशेषिकादिवत्" (सांख्य० १।२५) इत्यादिसूत्रे वैशेषिकादि नाम दृष्ट्वा कणादादिप्रणीतेभ्यो वैशेषिकादिदर्शनग्रन्थेभ्योऽस्य सांख्यदर्शनस्यार्वाक्कालत्वं कल्प्यते तदपि न कल्पनीयं यतो हि वैशेषिकादीनि दर्शनविद्यानामानि यौगिकानि, दर्शनानि खलु वेदानामुपाङ्गानि वैदिककालादेव मनीषिणां विचारविषयाः "सांख्यं योगं समभ्यस्येत्" (निरुक्त० १४।६) गर्भे सांख्ययोगचिन्तनम् "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः" (मुण्डको० ३।२।६) अत्र योगस्य वेदान्तस्यापि नाम विद्यते वेदान्तदर्शनं तु व्यासप्रणीतं किं तदुपनिषद्भ्यः प्राक्तनं कल्पनीयम्? तत्र तूपनिषदः प्रमाणीक्रियन्ते, न तस्योपनिषद्भ्यः प्राक्तनत्वं कल्पयितुं युज्यते। इत्थं वैशेषिकन्यायसांख्ययोगमीमांसावेदान्तनामानि दर्शनविद्यानामानि। अथ च पूर्वोक्तेषु प्रबन्धेषु त्रिषु सांख्यकारिका पुरातनीति तु चिन्तनीयमेव, यतो विज्ञानभिक्षुभाष्ये तु प्राचुर्येण ताः कारिका उद्धृताः किन्तु विज्ञानभिक्षुभाष्यतः पुरातनभूतायामनिरुद्धवृत्तावेकाऽपि कारिका न विद्यते तेन कारिकाग्रन्थस्य पुरातनत्वं सन्दिग्धम्।

(ख) दर्शनस्यास्य पुरातनं भाष्यं तु भागुरिमुनिकृतमासीत् तत्त नोपलभ्यते कालेन कवली कृतं हि तत्, तदवरभाष्याणि त्रीण्युपलभ्यन्ते यानि पुरातनकल्पानि मन्यन्ते। तत्रानिरुद्धवृत्तिः पुरातनी, तदनु महादेव-वेदान्तिरचितं भाष्यं यतस्तत्र भाष्यकारो महादेवः "दृष्ट्वाऽनिरुद्धवृत्तिम्" इत्युक्त्वा स्वभाष्यं व्यदधात्। पश्चात् किल विज्ञानभिक्षुभाष्यं यतस्तत्रानेकत्रानिरुद्धवृत्तेर्वचनान्युद्धृत्य तत्खण्डनं कृतमस्ति। तद्यथा— "सप्तदशैकं लिङ्गम्" ( सांख्य० ३।९ ) इति सूत्रे "एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश, अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्र-वक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गम् मन्तव्यं न तु सप्तदशमेकं चेत्यष्टाद-शतया व्याख्येयम्" ( विज्ञानभिक्षुभाष्यम् ) अत्र 'न तु सप्तदशमेकं चेत्यष्टा-दशतया व्याख्येयम्' इति खण्डनमनिरुद्धवृत्तेः। अनिरुद्धवृत्तौ "सप्तदश च एकञ्च अष्टादश तैः लिङ्गं सूक्ष्मदेह उच्यते बुद्ध्यहङ्कारमनांसि पञ्चसूक्ष्म-भूतानि दशेन्द्रियाणीति" ( अनिरुद्धवृत्तिः ) तथा "उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा" ( सांख्य० ५।१०० ) इति सूत्रे "कश्चित्तु तादात्म्यसम्बन्धे-नात्र समवायस्यान्यथासिद्धिमाह तन्न" ( विज्ञानभिक्षुभाष्यम् ) "यदि समवायो नास्ति कथं शुक्लः पटः··इत्याह–उभयत्रा० उभयत्रापि तादात्म्येन एव उपपत्तेः" ( अनिरुद्धवृत्तिः ) इत्थं पूर्वभाष्येषु विज्ञानभिक्षुभाष्यमवरतममस्ति। विज्ञानभिक्षुभाष्येऽनिरुद्धवृत्तितः सूत्रभेदोऽपि शतशः कृतोऽस्ति, क्वचित् क्वचित्तु तत्पाठं दत्त्वा—'इति पाठे तु' लिखित्वा भिन्नार्थं व्यदधात्।

२—अनिरुद्धविज्ञानभिक्षुप्रभृतिकृतेषु भाष्येषु दर्शनमिदमीश्वर-प्रतिवादपरं घोषितं तत्खलु नितान्तमसत्यमयुक्तं च। तत्कथमत्रोच्यते—

(क) अत्र सांख्यदर्शने स्थाने स्थाने श्रुतिः प्रमाणीक्रियते, त्रिंशत्कृत्वः श्रुतिशब्दः प्रयुक्तः सूत्रेषु। तदा कथमेतत्सम्भवेत् सांख्यकार ईश्वरं न मन्यते यतः श्रुतीनां प्राधान्येन प्रतिपाद्यविषय ईश्वरः परमात्मा ब्रह्म। तद्यथा—

ईशावास्यमिदंᳬ सर्वं यत्किञ्च जगत्यां जगत्।
( यजु० ४०।१ ईशो० १ )

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमति नान्यः पन्था विद्यतेऽयनाय॥
( यजु० ३१।१८ )

उत स्वया तन्वा संवदे तत्कदान्वन्तर्वरुणे भुवनानि।
किं मे हव्यमहृणानो जुषेत कदा मृलीकं सुमना अभिख्यम्॥
( ऋ० ७।८६।२ )

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
( अथर्व० १०।८।१ )

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
( मुण्डको० ३।१।३ )

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतिषु तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
(श्वेता० २।१७)

इत्थं श्रुतिं प्रमाणं स्वीकृतवता सूत्रकारेण किलेश्वरप्रतिवादः कृत इति कल्पना न युक्ता ।

(ख) सांख्यदर्शनं हि योगदर्शनस्य समानशास्त्रं तत्र योगदर्शने खल्वीश्वरस्य स्वीकारः "ईश्वरप्रणिधानाद्वा" ( योग० १।२३ ) पुनश्च "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" ( योग० १।२४ ) एवं सांख्यदर्शनस्य योगदर्शनेन सह समानतन्त्रत्वात् तत्र सांख्येऽपीश्वर-स्वीकारेण भवितव्यं न हि तद्विरोधेनेति । इत्थं समानतन्त्राचारादपि सांख्ये किलेश्वरप्रतिवादो न कल्पनीयः । समानतन्त्रत्वमुक्तं च सांख्य-स्य खल्वीश्वरविषयतायाम् "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः" ( श्वेता० ६।१३ ) तथा "सांख्यं योगं समभ्यस्येत पुरुषं वा पञ्चविंशकम्" (निरुक्त० १४।६) ।

(ग) सांख्यसिद्धान्ते खल्वीश्वरः स्वीक्रियते चेत्युपलभ्यते—

अत्र ते संशयो मा भूज्ज्ञानं सांख्यं परं मतम् ।
अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनम् ॥
अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम् ।
कूटस्थं चैव नित्यं च यद् वदन्ति मनीषिणः ॥
( महा० शान्ति० मोक्ष० अ० ३०१।१०१,१०२ )

निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुम् ।
विभुं त्यजति चाव्यक्तं यदा त्वेतद् विबुध्यते ॥
विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥
विमलात्मा च भवति समेत्य विमलात्मना ।
( महा० शान्ति० प० मोक्ष० अ० ३०८।२०,२६,२९ )

३—सांख्यसूत्राण्यवलम्ब्य यः खल्वीश्वरप्रतिवादो भाष्यकारैः कृतस्तद्विशिष्टविवेचना तु किलास्मत्कृते तत्तत्सूत्रभाष्ये यथास्थानमागमिष्यति हि तथाप्यत्रापि संक्षेपेण प्रदर्श्यते—

(क) "ईश्वरासिद्धेः" ( सांख्य० १।९२ ) इति सूत्रं नेश्वरनिषेधपरं किन्त्वीश्वरस्यासिद्धिप्रसङ्गदोषप्रदर्शनपरं यतो हि सांख्यदर्शने प्रत्यक्षलक्षणं प्रसिद्धप्रत्यक्षलक्षणाद् विलक्षणं कृतम्" "यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्" ( सांख्य० १।८९ ) अत्र प्रत्यक्षलक्षणे न किमपि करणमुपकरणमुक्तं यद्द्वारा सम्बन्धाद् विज्ञानं प्रत्यक्षं स्यादिति दोषपरिहाराय तदग्रे सूत्रम् "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" ( सांख्य० १।९० ) योगिनामान्तरिकप्रत्यक्षमप्यत्र प्रत्यक्षलक्षणे गृहीतं स्यादतो न करणोपकरणोपादानं तच्च योगिनां प्रत्यक्षमपि ग्राह्यं यतस्तेन विना खलु "ईश्वरासिद्धेः" ( सांख्य० १।९२ ) ईश्वरस्यासिद्धिः प्रसज्येत । सांख्यदर्शने तथाभूत ईश्वरः स्वीक्रियते हि यस्य वशीभूता प्रकृतिः कार्यरूपे परिणमते । उक्तं हि "अकार्यत्वेऽपि तद्योगः पारवश्यात्" ( सांख्य० ३।५५ ) यस्य खलु परस्य वशवर्तिनी प्रकृतिः स परः "स हि सर्ववित् सर्वकर्ता" ( सांख्य० ३।५६ ) इत्थं सर्वज्ञः सर्वकर्ता खल्वीश्वरो यो वैदिकैः स्वीक्रियते सोऽत्र सांख्ये वर्णितः "ईदृशेश्वरसिद्धिः सिद्धा" ( सांख्य ३।५७ ) ईदृशस्येश्वरस्य सिद्धिस्तु नित्याऽबाध्या ।

(ख) समाधानमुखेनोच्यते "तद्योगेऽपि न नित्यमुक्तः" (सांख्य० ५।७) कर्मानपेक्षः फलप्रदाता खल्वीश्वरो रागेण युज्येत रागयोगे न स नित्यमुक्तः स्यात्, अस्ति हीश्वरो नित्यमुक्तः, स्वीक्रियते सांख्यदर्शनेऽपि तस्य नित्यमुक्तत्वम् "नित्यमुक्तत्वम्" ( सांख्य० १।१६१ ) पुरुषविशेषस्येश्वरस्य परमात्मनो नित्यमुक्तत्वमत्र वर्णितं हि तद्भिन्नः पुरुष आत्मा-जीवात्मा न नित्यमुक्तः । उक्तं हि "नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते" (सांख्य० ३।७१) ।

(ग) अविद्याया विद्यातोऽन्यत्वे दोषप्रदर्शनमुखेनोच्यते "विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः" ( सांख्य० ५।१६ ) ब्रह्मणो बाधः प्रसज्येत स च ब्रह्मबाधोऽनभीष्टः सांख्ये ब्रह्मणः स्वीकारात्, स्वीक्रियते हि सांख्यदर्शने ब्रह्म "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" ( सांख्य० ५।११६ ) अत्रानिरुद्धवृत्तावप्युक्तम् "ब्रह्मरूपता ब्रह्मणा सह तुल्यरूपता" ( अनिरुद्धः ) आश्चर्यं ह्येतद् विज्ञानभिक्षुभाष्ये "समानः प्रकृतेर्द्वयोः" (सांख्य० १।६९) इति सूत्रे सिद्धान्तार्थतया प्रकृतेरुत्पत्तिर्गौणीति प्रदर्शनाय प्रकृतिपुरुषयोरुपरि

विष्णुर्नाम पौराणिक ईश्वरोऽभिमतः "अथवा द्वयोः प्रकृतिपुरुषयोः समान एव न्याय इत्यर्थः, यतः प्रधानपुरुषयोर्यतश्चैतच्चराचरम् । कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ।" ( विज्ञानभिक्षुभाष्यम् ) अस्तु । यदन्यदालोचनीयं तत्खलु तत्तत्सूत्रभाष्यप्रसङ्गे यथास्थानमस्माभिरालोचयिष्यते ।

(४) अथास्य दर्शनस्य वैशिष्ट्यम्—प्रकृतेराद्योपादानत्वं सर्वोपादानत्वं च, तन्मात्राणां सूक्ष्मभूतानां कार्यत्वम् , इन्द्रियाणामाहङ्कारिकत्वं प्रसरणशीलवृत्तिमत्त्वं च, शरीरस्य पृथिव्युपादानकत्वम् , जगतोऽभिव्यक्तिवादः सत्कार्यवादो वा, बन्धस्य कारणमविवेकनिमित्तकः स्वस्वामिभावः, मोक्षस्योपायो विवेकः, प्राधान्येन मुक्तेरात्यन्तिकदुःखनिवृत्तिस्वरूपत्वम् , मुक्तेः पुनरावृत्तिः, जीवात्मनोऽणुत्वचिद्रूपत्वबहुत्वानि, ईश्वरस्य सच्चिदानन्दस्वरूपत्वं सर्वज्ञत्वमनौपादानिकं कर्तृत्वं चेति ।

विज्ञानभिक्षुभाष्यतोऽनिरुद्धवृत्तेः प्राक्तनत्वादत्र भाष्येऽस्माभिस्तत्पाठ एव प्रायः सूत्राणामाश्रितः ।

इत्यलं विपश्चिद्वर्येषु ॥

स्वामी ब्रह्ममुनिः परिव्राजकः
१४।६।१९५५

---

विज्ञप्तिः—

ग्रन्थान्तसंलग्नशुद्धाशुद्धपत्रानुसारतः संशोध्याधीयताम् , मुद्रणाक्षराणामदार्ढ्यादत्र रेफहल्चिह्नमात्राणां पतनाप्रकटनदोषा अपि प्रायः सञ्जातास्तेऽपि स्वयमूह्याः संशोध्याश्च विद्वद्भिः ।

ओ३म्

# सांख्यदर्शनं ब्रह्ममुनिभाष्योपेतम्

तत्र

## प्रथमोऽध्यायः

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥१॥

(अथ) अथ शब्दोऽधिकारार्थः, इदानीं (त्रिविधदुःखात्यन्तनिवृत्तिः) त्रिविधस्य त्रिप्रकारस्य--आध्यात्मिकाधिभौतिकाधिदैविकभेदान्वितस्य दुःखस्यात्यन्तनिवृत्तिरनपरान्तनिवृत्तिः (अत्यन्तपुरुषार्थः) परमः पुरुषार्थः परमं पौरुषं पुरुषत्वं मानवस्य--मानवजीवनस्य परमं साफल्यं यदस्ति तदत्राधिक्रियते ॥१॥

तदुपायचिन्तनायां दृष्टसाधनस्यापर्याप्तत्वं दर्श्यते--

न दृष्टात् तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात्* ॥२॥

( दृष्टात् तत्सिद्धिः-न ) दृष्टात् साधनात् खलु लोके प्राप्यमाणात् सधानात् तथाभूतनिवृत्तिसिद्धिर्न भवति न भवितुमर्हति। यतः ( निवृत्तेः-अपि-अनुवृत्तिदर्शनात् ) कस्यचिन्निवृत्तेरनन्तरमपि पुनरनुवृत्तिर्दृश्यते हीत्यतः ॥२॥

दृष्टसाधनाद् दुःखप्रतीकारे खलु-

प्रात्याहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम्॥३॥

(प्रात्याहिकक्षुत्प्रतीकारवत् ) प्रत्यहं यथा क्षुत्प्रतीकारो भोजनात् क्रियते तद्वत् ( प्रतीकारचेष्टनात् ) तस्य त्रिविधदुःखस्य प्रतीकारव्यापारात् ( पुरुषार्थत्वम् ) पुरुषार्थता भवतु न त्वत्यन्तपुरुषार्थतेति यावत् ॥३॥

तत्र च--

सर्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः॥४॥

(सर्वासम्भवात् ) दृष्टसाधनाद् दुःखप्रतीकाररूपायां पुरुषार्थतायां कस्यचिदेकस्यैव दुःखस्य प्रतीकारो भविष्यति यतस्तस्मादेकस्माद्दृष्टसा-

*'' ··निवृत्तेर···' अनिरुद्धवृत्तिपाठः । '···निवृत्तेऽ···' विज्ञानभिक्षुभाष्यपाठः ।

धनात् तत्सम्बद्धमेव दुःखं निवर्तिष्यते, नहि सर्वदुःखनिवृत्तिसम्भवस्तस्मात् (सम्भवे-अपि) अथ च बहुविधदृष्टसाधनसमुदायात् सर्वदुःखप्रतीकारसम्भवेऽपि ( सत्त्वासम्भवात् ) सत्त्वस्य वास्तविकदुःखप्रतीकारस्य नितान्तदुःखनिवृत्तिरूपस्य मोक्षस्यासम्भवात् । उक्तंहि यथा "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" (योग० २। १५) तस्मात् ( प्रमाणकुशलैः-हेयः) प्रकृष्टं मीयते येन तत्प्रमाणं समतोलनं तत्र कुशलैः समतोलनकुशलैर्दूरदर्शिभिर्विवेकिभिः स एष दृष्टसाधनगणाद् दुःखप्रतीकारस्त्याज्यो नादरणीयः ॥४॥

अपरं च--

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥५॥

(उत्कर्षात्-अपि) शास्त्रविहितयज्ञादिदृष्टसाधनानुष्ठानाद् भवतूत्कर्षः, परन्तूत्कर्षाद्धेतोरपि मोक्षे हि खलूत्कर्षो न तथा यज्ञादिदृष्टसाधनसाध्ये दुःखनिवृत्तिरूपे पुरुषार्थे । यतः (मोक्षस्य सर्वोत्कर्षश्रुतेः) मोक्षस्य हि सर्वोत्कर्षविषयिका श्रुतिरस्तीति हेतोः "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छान्दो० ८।१२।१) "एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पत्" ( बृह० ६।३।३२ ) तस्माद् दुःखात्यन्तनिवृत्तिरूपाय मोक्षाय तदेतद् यज्ञादिदृष्टसाधनमुपादेयं न, किन्तु यमनियमाद्यष्टाङ्गयोगानुष्ठानमदृष्टसाधनमुपादेयम् ॥५॥

भवतु मोक्षस्य सर्वोत्कृष्टत्वम्, मोक्षो भविष्यति हि बद्धस्य तर्हि बद्धस्य मोक्षे--

अविशेषश्चोभयोः ॥६॥

(उभयोः) दृष्टादृष्टयोः साधनयोः (च) अपि (अविशेषः) अभेदोऽस्ति नास्ति भेदः साधनत्वाद् यथा यज्ञादिदृष्टं साधनं तथैव योगाभ्यासश्रवणादिकमदृष्टं साधनमुभयोः साधनसाम्यमस्ति हि, साधनसाम्याददृष्टसाधनादपि बद्धस्य विमोक्षो न भवेदिति पूर्वपक्षः । अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये हरिप्रसादवैदिकवृत्तौ च सूत्रमिदन्यथाव्याख्यातं तत्र पूर्वापरसङ्गतेरभावोऽस्मद्भाष्ये पूर्वापरसाङ्गत्यं प्रत्यक्षम् ॥६॥

अत्रोच्यते--

न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥७॥

(स्वभावतः-बद्धस्य) स्वरूपतो बद्धस्य ( मोक्षसाधनोपदेशविधिः-न) मोक्षसाधनोपदेशविधानं न भवति, अस्ति हि शास्त्रेषु मोक्षसाधनोपदेशः

"तमेव विदित्वाऽति मृत्युमेति" ( यजु० ३१।१८ )" तमेव विदित्वा न बिभाय मृत्योः" (अथर्व० १०। ८।४४) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"(मुण्डको० २।२।८) "भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" ( केनो० २।५) तस्माद् यदुक्तमुभयोर्दृष्टादृष्टयोः साधनयोर्विशेषो न बद्धस्य जीवात्मनोऽदृष्टसाधनाद् योगाभ्यासश्रवणाद्यनुष्ठानादपि मोक्षो न भविष्यतीति न युक्तं यतो जीवात्मा न स्वभावतो बद्धः किन्तु निमित्ततो बद्धः खलु सः, तथाभूतं बन्धननिमित्तमपनेतुं योगाभ्यासाद्यदृष्टसाधनं समर्थम् ॥७॥

स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधौ का हानिः । अत्रोच्यते—

स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥८॥

(स्वभावस्य—अनपायित्वात्) स्वभावो भवत्यनपायी, यो यः स्वभावो यस्य यस्य द्रव्यस्य भवति स न तस्माद् द्रव्यादपैति, न हि तद्द्रव्यं परित्यजति वा स्वभावस्य यावद्द्रव्यभावित्वात्, तस्मात् स्वभावतो बद्धस्य (अननुष्ठानलक्षणमप्रामाण्यम्) मोक्षविधानमननुष्ठानावकाशं सदप्रामाण्यं स्यादप्रामाण्यदोषमाप्नुयात् ॥८॥

तथा च--

नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥९॥

(अशक्योपदेशविधिः-न) अशक्यकार्यस्योपदेशविधानं नोचितं यतः (उपदिष्टे-अपि-अनुपदेशः) उपदिष्टे सत्यपि तस्यानुपदेश एवानुष्ठानासम्भवाद् भवति, तस्माज्जीवात्मा न स्वभावतो बद्धः किन्तु तस्य निमित्ततो बद्धस्य योगाभ्यासश्रवणाद्यदृष्टसाधनानुष्ठानाद् भविष्यति मोक्ष इति कथनं समीचीनं मोक्षोपदेशसार्थक्यं च ॥९॥

शङ्कयित्वा समाधत्ते सूत्रद्वयेन--

शुक्लपटवद्बीजवच्चेत् ॥१०॥

शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥११॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति-

(शुक्लपटवत्-बीजवत्-चेत्) शुक्लपटस्य यथा रागेण स्वाभाविकं शुक्लत्वं हीयते बीजस्य वा यथाऽङ्कुरप्रादुर्भावादादितो वर्तमानं बीजस्वरूपं हीयते तथैव जीवात्मनोऽपि स्वाभाविको बन्धो हीयेतेति चेदुच्येत

तर्हि (शक्त्युद्भवानुद्भवाभ्याम्) शुक्लपटे रागग्रहणस्य बीजे चाङ्कुर-प्रादुर्भावस्य शक्तिरस्ति स्वाभाविकी, नह्यस्वाभाविकी केवलं तस्याः शक्तेरुद्भवोऽनुद्भवश्च दृश्यते। शुक्लपटे रागग्रहणशक्तेः पूर्वतो विद्यमानत्वात् तस्या रागप्रदानेनोद्भवो जायते पूर्वं च रागप्रदानादनुद्भूता वर्तते, इत्थमेव बीजेऽङ्कुरप्रादुर्भावशक्तेः पूर्वतोविद्यमानत्वात् तस्या अंकुरप्रादुर्भावादुद्भवो भवति पूर्वं च प्रादुर्भावादनुद्भूता वर्तते हि, यद्येवं न स्यात् तर्हि शुक्लपटस्य शुक्लपटत्वं बीजस्य च बीजत्वं व्यर्थं भवेत्। तस्मात् (अशक्योपदेशः-न) शास्त्रेऽशक्योपदेशो न भवति। बन्धस्तु जीवात्मनो न स्वाभाविकः किन्तु निमित्ततोऽस्ति, निमित्ततो बद्धस्यैव जीवात्मनो मोक्षोपदेशो नाशक्य इति सिद्धम्। अत्र "शक्त्युद्भवानुद्भवाभ्यां" उद्भवानुद्भवशब्दौ प्रयुक्तौ, उद्भवः प्रादुर्भाव आविर्भावो वा तथा अनुद्भवः-अप्रादुर्भावोऽनाविर्भावो वा' इत्यर्थस्वारस्यं परित्यज्य खल्वनिरुद्धवृत्तौ 'अनुद्भवः' इत्यस्य 'अभिभवः' विज्ञानभिक्षुभाष्ये तस्यैव 'तिरोभावः' इति अर्थं विधाय दग्धबीजादप्यङ्कुरोत्पादो योगिसङ्कल्पाद् भवतीत्यप्रासङ्गिकी योगिसङ्कल्पकल्पना कृता सा खल्वयुक्तैव। नहि 'अनुद्भवशब्द उद्भव शब्दस्य प्रतियोगी, उद्भवस्तु प्रादुर्भाव आविर्भावो वा भवति 'अनुद्भवः' इत्यस्य तत्प्रतियोगिनाऽर्थेन भवितव्यं न हि 'अभिभवः' 'तिरोभावः' वा तत्प्रतियोगी किन्तु प्रादुर्भूतस्यापि केनचिद्बाधकेन भवत्यभिभवस्तिरोभावो वा, अत्र शक्तेरुद्भवोऽनुद्भवः प्रतिपाद्यते। तस्मात् तयोः कल्पनाऽयुक्ता ॥१०-११॥

अस्तु तर्हि निमित्ततो बद्धस्य जीवात्मनो मोक्षोपदेशः कस्मान्निमित्तात् खलु स बद्ध इति युक्तिप्रयुक्तिभिर्मीमांस्यते, सैषा मीमांसा कतिपयैः सूत्रैः प्रवर्त्यते। तत्र प्रथमं कालविषये—

**न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥१२॥**

(कालयोगतः-न) कालसम्बन्धात् स जीवात्मा न बद्धः कालनिमित्तको बन्धो न जीवात्मनः। यतः (व्यापिनः-नित्यस्य सर्वसम्बन्धात्) कालस्तु व्यापी नित्यश्च स च सर्वैः सदा सम्बध्यते, व्यापिनः सर्वसम्बन्धवतः पदार्थात् खलु विमोक्षानुपपत्तिः। नित्यश्च स, न हि सोऽनित्यो यत्कदाचित् तेन सह सम्बन्धो भवति कदाचिन्नेत्यपि न। तस्मात् कालनिमित्ततो बन्धो न यतस्ततो तां विमोक्षानुपपत्तेः ॥१२॥

देशविषये—

न देशयोगतोऽप्यस्मात् ॥१३॥

(देशयोगतः-अपि न) देशोऽत्राकाशदेशः। आकाशरूपदेशसम्बन्धादपि न जीवात्मा बद्धो यदाकाशदेशात् तस्य विमोक्षोपदेशः स्यात्। कुतः ( अस्मात् ) पूर्वोक्तादेव हेतोर्व्यापिनो नित्यस्य ह्याकाशदेशस्य, न हि व्यापिनो नित्यात् स्याद् विमोक्षः कदाचित् ॥१३॥

अवस्थाविषये-

नावस्थातो देहधर्मत्वात् तस्याः ॥१४॥

(अवस्थातः-न) बाल्ययौवनवार्धक्यावस्थातो न जीवात्मा बद्धः, कुतः (तस्याः-देहधर्मत्वात्) तस्या बाल्यादिरूपाया अवस्थायाः खलु देहधर्मत्वात्, देहे हि बाल्याद्यवस्था परिणामो ऽवतिष्ठते देहश्च प्राप्यते बन्धानन्तरम्, तस्मात् तथाकृत्वापि मोक्षोपदेशोऽनवसरः ॥१४॥

पुनश्च—

असङ्गोऽयं पुरुष इति ॥१५॥

(अयं पुरुषः-असङ्गः-इति) अयं खलु देहाद् भिन्न आत्मा, असङ्गो देहधर्मादवस्थापरिणामादसंसक्त इति हेतोश्च, तथा च "असङ्गो ह्ययं पुरुषः (बृह० उ० ४।३।१५) इति साक्षाच्छ्रुतौ पठ्यते ॥१५॥

कालादियोगान्न बद्धो न चावस्थारूपाद्देहधर्माद् बद्धस्तर्हि कर्मणा बद्धः स्यात्। अत्रोच्यते-

न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥

( कर्मणा न ) अत्र कर्मशब्देन करणवृत्ति र्गृह्यते। कर्म कार्यं व्यवहारः करणव्यवहारो दानादानभाषणादिव्यवहारः। तेन कर्मणा न जीवात्मा बद्धः। यतः ( अन्य-धर्मत्वात् ) पुरुषादन्यस्याहङ्कारस्य तदधीनेन्द्रियाणां च धर्मो हि कर्म तस्मात्। तथा (अतिप्रसक्तेः-च) अतिप्रसङ्गदोषादपि, अन्यधर्मेण बन्धस्वीकारे मुक्तानामपि बन्धप्रसङ्ग आपत्स्यते तत्रान्यधर्मस्य बन्धहेतुत्वसामान्यात् ॥ १६ ॥

अथान्योऽयमपि दोषोऽन्यधर्मस्य बन्धहेतुत्वे किलोपतिष्ठते-

विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥

( अन्यधर्मत्वे ) अन्यधर्मस्य फलहेतुत्वस्वीकारे ( विचित्रभोगानुपपत्तिः ) संसारे विविधभोगानामयुक्तता स्यात्। दृश्यन्ते खलु केचिद्ब-

?

हुसुखिनः केचनाल्पसुखिनः केचित्सुखहीनाः केचिन्महादुःखिनस्तथा केचित्पूर्णाङ्गाः केचन विकलाङ्गा गलिताङ्गाश्चेत्येते विविधभोगा नोपपद्येरन् यतोऽन्यस्य कृतकर्मणः फलमन्यश्चेद् भुञ्जीत ॥ १७ ॥

प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ॥ १८ ॥

( प्रकृतिनिबन्धनात्–चेत्–न ) प्रकृतिरेव पुरुषं निबध्नातीति चेत् कल्प्येत तदपि न युक्तं यतः ( तस्याः–अपि पारतन्त्र्यम् ) तस्याः प्रकृतेरपि पारतन्त्र्यमस्ति, न हि प्रकृतिः स्वतन्त्रा जडत्वात् सा तु परतन्त्रा पुरुषतन्त्रा ॥ १८ ॥

न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९॥

( नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगः-न ) नित्यशुद्धबुद्धमुक्तस्वभाववतः पुरुषस्य प्रकृतियोगो न सम्भाव्येत । 'तद्योगः' इत्यत्र तच्छब्देन पूर्वसूत्रप्रकृतप्रकृतिरभिप्रेयते । एवं पूर्वसूत्रे प्रकृतेः पुरुषेण सह योगो निराकृतस्तस्याः परतन्त्रत्वात् पुनः पुरुषस्य स्वातन्त्र्ये सत्यपि सूत्रेऽस्मिन् तस्य प्रकृत्या सह योगः प्रत्याख्यातस्तस्य नित्यशुद्धबुद्धमुक्तस्वभाववत्त्वात् तस्य प्रकृतियोगं प्रति खलूपेक्षा । तदा ( तद्योगात्-ऋते ) तयोरुभयोः प्रकृतिपुरुषयोर्योगादृते पुनर्बन्धकारणं यत्कल्पयितुं शक्यते तद्विचार्यतेऽग्रिमसूत्रजातेन । सूत्रेऽत्र 'तद्योगः' शब्दस्यार्थोऽनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये स्वामिहरिप्रसादभाष्ये च 'बन्धयोगः' कृतः; परन्त्वत्र तथार्थेन न भवितव्यं यतः पूर्वसूत्रे पुरुषेण सह सम्बन्धाय प्रकृतिरसमर्था परतन्त्रत्वादुक्ताऽत्र सूत्रे प्रकृत्या सह सम्बन्धाय पुरुषः प्रकृतिवत्परतन्त्रस्तु न किन्तु स्वतन्त्रः सन्नपि स नित्यशुद्धबुद्धमुक्तस्वभाववत्त्वादनपेक्षस्तथोपेक्षावृत्तिकस्तस्मात् तस्य प्रकृतियोगो न सम्भावनीयः । अत एवात्र 'तद्योगः' शब्दस्यार्थः प्रकृतियोग एव सत्यार्थोऽन्यथा 'नित्यशुबुद्धमुक्तस्वभावस्य' इति कथनवैयर्थ्यं स्यात् । पुरुषस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वं तस्य तद्योगनिषेधे प्रकृतियोगनिषेधे हेतुप्रदर्शनम् । पुनश्च 'तद्योगादृते' इत्यस्यार्थोऽपि तत्रोभयत्रानिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च 'प्रकृतियोगादृते' कृतः सोऽप्ययुक्त एव, पूर्वोक्तं हेतुद्वयमत्रापि यतः, कथं हि स्यात् प्रकृतियोगः प्रकृतिस्तु परतन्त्रा तद्द्वारा निषिद्ध एव, पुरुषद्वारा स्यात् प्रकृतियोगस्तदापि न सोऽपि नित्यशुद्धबुद्धमुक्तस्वभाववान् सन्ननपेक्षः तद्द्वाराऽपि प्रकृतियोगो निषिद्धः । एवमुभयद्वारा निषिद्धे योग एकपक्षयोगो न सम्भावनीयः, सम्भावनीयस्तूभयाधीनः स स्वस्वामिभावरूपः शास्त्रा-

न्ते स्वीकृतोऽस्ति। तथा च तद्योगे भिन्नभिन्नहेतूनामयोग्यत्वं प्रदर्श्यान्ते पञ्चपञ्चाशत्तमे सूत्रे तद्योगस्य प्रकृतिपुरुषयोगस्य कारणमुक्तमस्त्यविवेकः "तद्योगोऽप्यविवेकान्न समानत्वम्" [ ५५ ] प्रकृतिपुरुषयोर्योगस्य तयोः स्वस्वामिभावस्य कारणमविवेकः प्रदर्शितः, यथा ह्यत्र तद्योगस्य कारणमविवेकः प्रदर्शितस्तथैव शास्त्रान्ते स्वस्वामिभावस्य कारणमविवेकं प्रादर्शयदाचार्यः "अविवेकनिमित्तो वा पञ्चशिखः" [६।६८] तस्मादनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये तथा स्वामिहरिप्रसादवृत्तौ च नितान्तमयुक्तमुक्तम् ॥ १९ ॥

अथ तद्योगस्य प्रकृतिपुरुषयोगस्यान्यत्कारणं यत्कल्पयितुं शक्यते तद्विचार्यते–

नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥

( अविद्यातः–अपि न ) विद्याया अभावोऽविद्या तया खल्वभावरूपयाऽपि जीवात्मनो बन्धः कल्पयितुं न युज्यते। यतः ( अवस्तुना बन्धायोगात् ) तथाभूतयाऽवस्तुरूपयाऽवस्तुरूपेणाभावेन बन्धयोगस्यासम्भवात्। न हि क्वचिदवस्तु वस्तु बध्नाति, वस्तुबन्धनयोगः केनचिद् वस्तुना भवितुं शक्यो नावस्तुना ॥ २० ॥

पुनः––

वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥

( वस्तुत्वे सिद्धान्तहानिः ) अविद्याया वस्तुत्वस्वीकारे दार्शनिकसिद्धान्तहानिर्भवति, न हि क्वचिद् दर्शने [ आर्षदर्शने ] अभावो वस्तुत्वेन स्वीक्रियते स्वीकर्तुं युज्यते वा दर्शनं तु तदेव स्वीकरोति यत्खलु सत्तारूपेण दृश्येत ज्ञानपथमागच्छेत् तदेव दर्शनस्य प्रतिपाद्यम् ॥ २७ ॥

अन्यच्च—

विजातीयद्वैतापत्तिश्च ॥ २२ ॥

( विजातीयद्वैतापत्तिः—च ) अथ च भावाद् भिन्नोऽभावोऽपि वस्तु चेत् स्वीक्रियेत तदा भावाद् भिन्नस्याभावस्य भावविजातीयद्वैतमापद्यते यत्सोऽभावो भाववद् विजातीयोऽपरसत्तारूपोऽनर्थकारी स चानिष्टो दर्शने ॥ २२ ॥

यद्वा--

विरुद्धोभयरूपा चेत् ।

न तादृक् पदार्थाप्रतीतेः ॥२३-२४॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति--

( विरुद्धोभयरूपा चेत् ) यदि ह्यविद्या वस्त्ववस्तुभ्यां विरुद्धा न वस्तु नाप्यवस्तु किन्तु विरुद्धा सती खलूभयरूपाऽस्तीति कल्प्येत तर्हि ( न ) नैतत्कल्पयितुं युज्यते। यतः ( तादृक्पदार्थाप्रतीतेः ) तादृशस्य पदार्थस्य प्रतीतिरुपलब्धिर्न भवति केनापि प्रमाणेन ॥ २३-२४ ॥

पूर्वपक्षत्वेन पुनरुच्यते—

न वयं षट्पदार्थ [ादि] वादिनो वैशेषिकादिवत् ॥२५॥

( वयं षट्पदार्थादिवादिनः-न ) अप्रतीतोऽपि पदार्थो भवतु यतो वयं षट्षोडशपञ्चविंशतिपदार्थवादिनो न स्मः ( वैशेषिकादिवत् ) वैशेषिकनैयायिकसांख्या इव, यथा तैः षट्षोडशपञ्चविंशतिसंख्याकाः पदार्था नियम्यन्ते॥ अत्र वैशेषिकादिकथनं गुणवशादस्ति न तु संज्ञावशाद्, वैशेषिकादिसिद्धान्तवादिनः कणादादिभ्यः पूर्वमपि स्युरिति सम्भवः॥२५॥

उत्तरयति--

अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ॥२६॥

( अनियतत्वे-अपि ) पदार्थानां षट्षोडशपञ्चविंशतिसंख्या नियता न स्यात् तथापि तेषामनियतत्वस्वीकारेऽपि ( अयौक्तिकस्य संग्रहः-न ) युक्तिविहीनस्य तथाभूतस्य वस्त्ववस्तुविरुद्धोभयरूपस्य संग्रहः सङ्ग्रहणं स्वीकारो न भवति ( अन्यथा बालोन्मत्तादिसमत्वम् ) अयौक्तिकस्वीकारे बालोऽज्ञः, उन्मत्तो मानसरोगेणोन्मनाः, आदिना मादकद्रव्यसेवनेन भ्रान्तः। तथाविधानां बालोन्मत्तभ्रान्तानां कथनमपि समानं स्वीकार्यं स्यात्। तस्मान्न तथाविधोऽविद्यापदार्थः स्वीकर्तुं योग्यः पुनस्तस्माद् बन्ध इति कथनस्य नावसरः॥ २६ ॥

जीवात्मनो बन्धविषयेऽन्या कल्पनोत्थाप्य परिह्रियते--

नानादिविषयोपरागनिमित्तोऽप्यस्य+॥२७॥

( अनादिविषयोपरागनिमित्तः—अपि—अस्य न ) अनादिविषयोप-

+'निमित्तः' इतिपाठोऽनिरुद्धस्य 'निमित्तकः' विज्ञानभिक्षोः।

रागो निमित्तं यस्य तथाभूतोऽनादिविषयोपरागनिमित्तको बन्धः। प्रवाहेणानादिविषयवासनानिमित्तकोऽपि किलास्य जीवात्मनो बन्धः स्यादित्यपि न वक्तुं शक्यते। क्षणिकवादे दोषापत्तिरेषा योज्या चतुस्त्रिंशे सूत्रे तत्पक्षप्रत्यक्षत्वात्, तत्र क्षणिकवादे खल्वात्मनोऽस्थिरत्वादनाधारत्वाच्च बन्धानुपपत्तिः ॥ २७ ॥

तथा–

न बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥२८॥

( बाह्याभ्यन्तरयोः–उपरञ्ज्योपरञ्जकभावः– अपि न ) बाह्यविषयोपरागो जीवात्मनो बन्धस्य निमित्तमिति यदुक्तं कथमपि न युक्तं तत्। यतो बाह्यस्य विषयस्योपरञ्जकभावोऽभ्यन्तरस्यामन उपरञ्ज्यभावोऽपि न सम्भवति। यतः ( देशव्यवधानात् ) विषयाः सन्ति शरीराद् बहिरात्मा च शरीरस्यान्तरे, इति देशव्यवधानहेतोस्तत्र दृष्टान्तः। ( स्रुघ्नस्थपाटलिपुत्रस्थयोः—इव ) यथैतयोर्भिन्नभिन्नदेशस्थयोरुपरञ्ज्योपरञ्जकभावो न भवति तद्वदत्रापि ॥ २८ ॥

क्षणिकवादेऽभ्यन्तरो ह्यात्माऽस्तीति न किन्तूभयत्र बहिरन्तरयोः समानत्वेन तस्य वर्तमानत्वमस्ति पुनस्तस्य बहिःस्थेन विषयेण सह सम्बन्धो भविष्यतीत्यत्रोच्यते--

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥२९॥

( द्वयोः–एकदेशलब्धोपरागात् ) विषयस्य जीवात्मनश्च द्वयोरेकदेशे यो लब्ध उपरागः सम्बन्धस्तस्मात् खलु (न व्यवस्था) व्यवस्था न भविष्यति क्षणिकवादे बन्धस्य मोक्षस्य च सर्वेषामात्मनां च क्षणिकत्वात् सर्वेऽपि बद्धा भविष्यन्ति शरीरिणोऽशरीरा वा स्युर्विषयेण सह सर्वेषां समानसम्बन्धात् ॥ २९ ॥

पुनराशङ्क्य समाधत्ते सूत्रद्वयेन प्रथममाशङ्कते--

अदृष्टवशाच्चेत् ॥३०॥

( अदृष्टवशात्–चेत् ) सर्वे बद्धा न भविष्यन्ति किन्तु तत्र व्यवस्था भविष्यत्यदृष्टवशात, तेषु यस्य यस्यादृष्टमवशिष्टं तस्य तस्य विषयोपरागो भविष्यति विषयोपरागाच्च बन्धो न हि सर्वेषां बन्ध इति चेदुच्येत ॥३०॥

तर्हि--

न द्वयोरेककालायोगादुपकार्योपकारकभावः ।।३१।।

( एककालायोगात्-द्वयोः-उपकार्योपकारकभावः-न ) भिन्नभिन्नकालसम्बन्धात्, अदृष्टकालेऽन्य आत्मा बन्धकाले चान्यो वस्तुजातस्य क्षणिकत्वात्क्षणिकवादे । न हि कमप्यात्मानं प्रति द्वयोरदृष्टबन्धयोरुपकारकोपकार्यभावः कारणकार्यभावो निमित्तनैमित्तिकभावो वा सम्भवति । तस्मात् क्षणिकवादे बन्धमोक्षव्यवस्था नोपपद्यतेऽत एव तत्र न प्रावाहिकविषयोपरागो बन्धहेतुः ।। ३१ ।।

पुनराशङ्कते-

पुत्रकर्मवदिति चेत् ।।३२।।

(पुत्रकर्मवत्-इति चेत्) पुत्रोत्पत्त्यर्थं गर्भाधानादिकं कर्म पुत्रकर्म, तस्मिन् गर्भाधानादिकर्मणि पुत्रस्य भिन्नभिन्नरूपाणि भवन्ति तत्र पूर्वावस्थाके पुत्रे कृतं संस्कारकर्म परावस्थाके पुत्रे व्यज्यते पूर्वपरयोः पुत्रस्वरूपयोः भिन्नभिन्नयोरुपकारकोपकार्यभावो भवति तद्वद्दृष्टबन्धयोर्भिन्नभिन्नयोरप्युपकारकोपकार्यभावो भविष्यतीति चेदुच्येत ।।३२।।

तर्हि—

नास्ति हि तत्र स्थिर एकात्मा यो गर्भाधानादिना संस्क्रियते ।।३३।।

(न) नह्येतद् युक्तमुक्तं यतः (तत्र स्थिरः-एकः-आत्मा-अस्ति हि) तत्र पुत्रस्य भिन्नभिन्नरूपेषु खलु स्थिर एक आत्मा गर्भाधानादादेहपातमस्ति हि (यः-गर्भाधानादिना संस्क्रियते) यो हि गर्भाधानादिना संस्कारकर्मणा संस्क्रियते ।।३३।।

पुनः पूर्वपक्षत्वेनोच्यते-

स्थिरकार्यासिद्धेः क्षणिकत्वम् ।।३४।।

(स्थिरकार्यासिद्धेःक्षणिकत्वम्) स्थिरकार्यस्यानुपलब्धेः कस्मिंश्चिदपि वस्तुनि स्थिरकार्यस्य स्थिरपरिणामस्याभावाद् वस्तुमात्रस्य क्षणिकत्वं सम्भवति तस्मादात्मनोऽपि क्षणिकत्वं विज्ञेयम् ।।३४।।

पुनरुत्तरयति-

न प्रत्यभिज्ञाबाधात् ॥३५॥

(न) वस्तुमात्रस्य क्षणिकत्वं न । कुतः (प्रत्यभिज्ञाबाधात्) प्रत्यभिज्ञाया बाधप्रसङ्गात्, यैषा प्रत्यभिज्ञा भवति बाल्ये योऽहमासं स एवाहं यौवनेऽपि स एवाहं वार्धक्येऽपि, य एवाहं प्रातरासं स एवाहं सायमप्यस्मि, य एवाहं सायं शयनवेलायामासं स एवाहं प्रातर्जागरणवेलायामप्यस्मीति यैषा प्रत्यभिज्ञा पुनःस्मृतिः स्वविषया भवति तस्या बाधप्रसङ्गदोषः स्यात्। तस्मादात्मा स्थिरोऽस्ति न क्षणिकः क्षणिकवादे विषयोपरागो न बन्धहेतुः ॥३५॥

अन्यच्च—

श्रुतिन्यायविरोधाच्च ॥३६॥

(श्रुतिन्यायविरोधात्-च) श्रुतिविरोधप्रसङ्गात् तथा न्यायविरोधप्रसङ्गादपि नात्मा क्षणिकः। श्रुतिस्तावत् "आत्मा....स इतः प्रयन्नेव पुनर्जायते" (ऐ० उ० ४।४) "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" (बृह० ४।५।१४) न्यायविरोधात्--तर्कविरोधप्रसङ्गादपि भोक्तुकामः सन् पुरुषो भोगसाधनं पूर्वमनुतिष्ठति पश्चात् स एव तत्फलं भोगरूपं भुंक्ते 'यः कर्ता स भोक्ता' इति न्यायः। यदि साधनानुष्ठानकाले भिन्नः फलभोगकाले भिन्नस्तर्हि कः साधनान्यनुतिष्ठेत् तदा लोकव्यवहारो नोपलभ्येत विनष्टो भवेत्, प्रसिद्धं च "को नामानुपभोग्ये कर्मणि तत्साधने वा प्रवर्तते" उपलभ्यते चैष व्यवहारो यदधुना साधनमनुतिष्ठेयं यतः पश्चात्फलं भुञ्जीय। तस्मान्न क्षणिक आत्मा ॥३६॥

अथ च-

दृष्टान्तासिद्धेश्च ॥३७॥

(दृष्टान्तासिद्धेः-च) क्षणिकवादे दृष्टान्तस्यासिद्धत्वादपि, यतः क्षणिकपक्षस्थापनायां पूर्वं हेतुं प्रदाय पश्चात् तस्य दृष्टान्तेन भाव्यं यद्वा पूर्वं दृष्टान्तमुदाहृत्य पश्चात् खलु हेतुः प्रदीयेतैवमुभयविधप्रक्रमेणापि दृष्टान्तस्य तद्विषये सिद्धिर्न भविष्यति यतोहि यदा पूर्वो हेतुप्रदानकालः पश्चात्स्याद्दृष्टान्तसाधनकालः तयोर्हेतुदृष्टान्तयोः पूर्वोत्तरकालस्थयोः क्षणिकत्वान्न सम्बन्धः सम्भवति यदस्य हेतोरयं दृष्टान्तः,

पूर्वस्य हेतोः क्षणिकत्वात् स नोत्तरकालं दृष्टान्तं सम्बद्धुं शक्नुयादथ यदा पूर्वमुपस्थापितो दृष्टान्तः पश्चाच्च हेतुर्दत्तस्तदा स दृष्टान्तः स्वोत्तर-कालेन हेतुना नाभिसम्बध्येतेत्येवमपि स्याद् दृष्टान्तासिद्धिस्तस्य क्षणिकत्वात् तस्मात् क्षणिकवादो न साधुस्तत्र नहि स्याद् बन्धमोक्ष-व्यवस्था ।।३७।।

अथ च–

युगपज्जायमानयोर्न कार्यकारणभावः ।।३८।।

(युगपज्जायमानयोः) समाने क्षणे काले वा जायमानयोः पदार्थयोः (कार्यकारणभावः–न) अस्येदं कारणं कार्यं वा न व्यवतिष्ठते यतः कार्यात् पूर्वमेव कारणेन भवितव्यं कार्यं च कारणात् पश्चादेव प्रवर्तते। अतएव हेतुदृष्टान्तयोरपि न यौगपद्यं समानक्षणत्वं भवितुमर्हति, न ह्येकस्मिन् क्षणे तयोः हेतुदृष्टान्तभावनिश्चयः सम्भवति तत्र पौर्वापर्य-स्यावश्यम्भावात् तस्मात् क्षणिकवादे बन्धस्य केनापि सह कार्यत्वा-नुपपत्तिः ।।३८।।

यतः–

पूर्वापाये उत्तरायोगात् ।।३९।।

(पूर्वापाये-उत्तरायोगात्) यदा सर्वं क्षणिकं तदा पूर्वस्यापाये नाशे सति तदुत्तरवर्तिन उत्पन्नस्य तेन नष्टेन पदार्थेन सहायोगात् सम्बन्धा-भावान्न स पूर्वः पदार्थस्तस्योत्तरस्य कारणमथ न चोत्तरः पदार्थस्तस्य पूर्वस्य पदार्थस्य कार्यमस्ति सर्वस्य क्षणिकत्वात् सम्बन्धाभावात् ।।३९।।

पुनश्च–

तद्भावे तदयोगादुभयव्यभिचारादपि न ।।४०।।

(तद्भावे तदयोगात्) तस्य पूर्वस्य भावे विद्यमानत्वे तस्योत्तरस्य पदार्थस्यासम्बन्धात् तदा तस्य विद्यमानत्वात् (उभयव्यभिचारात्–अपि न) एवमुभयव्यभिचारात् क्षणिकयोः पूर्वोत्तरयोरुभयथापि तयोरसम्बद्धत्वात् कार्यकारणभावो न क्षणिकवादे सम्भवति ।।४१।।

पुनःशङ्कयित्वा समाधत्ते–

पूर्वभाविमात्रे न नियमः ।।४२।।

(पूर्वभाविमात्रे नियमः–न) यो यो हि पूर्वभावी पूर्वक्षणवर्ती स स

पदार्थः तत्क्षणेऽवर्तमानोऽपि पूर्ववर्तित्वात् कारणं भवेदितिमात्रकथने नियमो नास्ति न भवितुमर्हति नापलभ्यते । यतः पूर्वक्षणवर्ती तु विनष्टो भवति क्षणिकवादे पुनरुत्तरक्षणवर्तिनः पदार्थस्य कार्यरूपस्य किंकारणमिति प्रश्नः । यदि हि पदार्थस्याक्षणिकत्वं स्थिरत्वं स्वीक्रियेत यत् कारणपदार्थः स्वकार्यस्य कालेऽपि वर्तते हि तदा तु नियमो भविष्यति यदिदमस्य कारणं कार्येऽन्वयित्वेनावतिष्ठते वस्त्रे तन्तवो भूषणे स्वर्णं घटे मृत्तिका, यथा अन्यथा स्वर्णं यद्वा मृत्तिकाऽपि वस्त्रस्य कारणतामापद्येत । तस्मान्न क्षणिकवादो युक्तस्तत्र बन्धस्य कारणानुपपत्तिः खलु तिष्ठत्येव ॥४१॥

विज्ञानवादो निरस्यते--

न विज्ञानमात्रं बाह्यप्रतीतेः ॥४२॥

(विज्ञानमात्रं न) सर्वं विज्ञानमात्रं न विज्ञानातिरिक्तं किञ्चित् तस्मान्न बन्धज्ञस्य कारणं वस्तुरूपमन्वेष्यंबन्धश्चापि न वास्तविकस्तस्यापि विज्ञानमात्रत्वादितीत्थं न विज्ञानमात्रम् । यतः (बाह्यप्रतीतेः) बाह्यवस्तुनो बाह्यैरिन्द्रियैः प्रतीतिर्भवति यतः । बाह्येन्द्रियैः प्रतीयमानो घटोऽयं घटोऽस्तीति प्रतीयते न तु 'अहं घटः' इति प्रतीयते ॥४२॥

पुनश्च--

तदभावे तदभावाच्छून्यं तर्हि ॥४३॥

(तदभावे तदभावात्) बाह्यविषयस्याभावे तस्य विज्ञानस्याभावोऽननुभवो भवेत् (तर्हि शून्यम्) तदा शून्यं प्रसज्यते । तस्मान्न विज्ञानमात्रम, वस्तुस्थित्या भवितव्यमेव, अतश्च बन्धकारणस्यान्वेषणं तु कार्यमेव ॥४३॥

शून्यवाद उत्थाप्यते--

शून्यं तत्त्वं भावो विनश्यत्रि वस्तुधर्मत्वाद् विनाशस्य ॥४४॥

(शून्यं तत्त्वम्) शून्यं खलु तत्त्वं वस्तुत्त्वम् । कुतः (भावः-विनश्यति) भावः सत्तात्मकः पदार्थो विनश्यति हि वस्तुधर्मत्वाद् विनाशस्य) विनाशः खलु वस्तुधर्मो वस्तुनो भावस्य सत्तात्मकस्य पदार्थस्य विनाशो धर्मः, सति विनाशे शून्यं सम्पद्यते पुनर्बन्धकारणस्य तथा मोक्षस्यापि नाशो भविष्यति तदा बन्धकारणान्वेषणस्यावश्यकतैव न भवति ॥४४॥

उत्तरयति--

अपवादमात्रमबुद्धानाम् ॥४५॥

(अबुद्धानाम्-अपवादमात्रम्) शून्यं तत्त्वमथ च भावो विनश्यतीति

कथनं खलु प्रलापमात्रमज्ञानां जनानाम्। यतः शून्यस्य साधनाय प्रमाणस्य स्वीकारः शून्यत्वघातकः प्रमाणस्य सद्भावात् तथाऽस्वीकारे प्रमाणाभावादसिद्धिः शून्यवादस्य। शून्यस्य साधनाय भावो विनश्यतीति कथने प्रथमं भावं स्वीकृत्यैव पश्चात् तस्य विनाशो दर्शितः, विनाशोऽपि न कस्यचित् सर्वथाऽभावो भवति पुनर्निरवयवस्यात्मनस्तु न विनाशसम्भवस्तस्याखण्डत्वात्, खण्डवान् पदार्थ एव विनष्टो भवति खण्डं खण्डं भूत्वा, खण्डखण्डभाव एव विनाशस्यार्थः पुनः खण्डानां सत्तासद्भावान्न शून्यमिति ॥४५॥

अपरञ्च--

उभयपक्षसमानक्षेमत्वादयमपि ॥४६॥

(उभयपक्षसमानक्षेमत्वात्-अयम्-अपि) उभययोः क्षणिकपक्षविज्ञानमात्रपक्षयोस्तुल्यनिराकरणहेतुत्वादयं शून्यवादपक्षोऽपि निराकृतोऽथायुक्तश्च विज्ञेयः। तत्र क्षणिकपक्षे विज्ञानपक्षे च यथा प्रत्यभिज्ञया बाह्यप्रतीत्या च क्षणिकविज्ञानपक्षनिराकरणं कृतं तथैव प्रत्यभिज्ञाप्रतीतिभ्यां शून्यवादस्यापि निराकरणं भवतीति विज्ञेयम् ॥४५॥

अथ च--

अपुरुषार्थत्वमुभयथा ॥४७॥

(उभयथा-अपुरुषार्थत्वम्) शून्यवादे खलूभयथा स्यादपुरुषार्थत्वं तत्र स्वस्यात्मनः शून्यत्वाय-अभावाय को यतेत तथा शून्यरूपाय मोक्षायापि कथं शास्त्रोपदेशः स्यात्। तथा सर्वस्य क्षणिकत्वे बन्धोऽपि क्षणिको मोक्षोऽपि क्षणिकस्तथा क्षणिकस्य बन्धस्य निवृत्त्यर्थः कृतः पुरुषार्थोऽपुरुषार्थः स्यान्नहि पुरुषार्थक्षणे बन्धोऽवतिष्ठते मोक्षस्यापि क्षणिकत्वात् तदर्थः कृतः पुरुषार्थोऽपुरुषार्थो भवेत् क्षणान्तरेऽस्थिरत्वात् ॥४७॥

गतिनिमित्तो बन्धः स्यादिति पक्षमुत्थाप्य निराकरोति सूत्रद्वयेन--

न गतिविशेषात् ॥

निष्क्रियस्य तदसम्भवात् ॥४८-४९॥

एतयोः सूत्रयोरेकवाक्यताऽस्ति--

(गतिविशेषात्-न) गतिविशेषादात्मनो बन्धःस्यात्, अधमगत्या लोके बन्धमाप्नोति जन इत्यपि न। यतः (निष्क्रियस्य तदसम्भावत्) निष्क्रियस्यात्मनो गत्यसम्भवात् ॥४८-४९॥

पुनश्च--

मूर्तत्वाद् घटादिवत्समानधर्मापत्तावपसिद्धान्तः ॥५०॥

(मूर्तत्वात्-घटादिवत्) गतेः सम्भवः खलु वस्तुनो मूर्तत्वाद् घटादिवत्, यथा घटादौ गतिरुपलभ्यते तस्य मूर्तत्वात् (समानधर्मापत्तौ-अपसिद्धान्तः) आत्मनि गतिस्वीकारे घटादिसमानधर्माणां कठोरत्वघनत्वखण्डवत्वरूपादिमत्त्वानामापत्तिर्भवेत् तदा चापसिद्धान्तः प्रसज्यते, तस्मादात्मनि न गतिसम्भवोऽतो न गतिविशेषात् तस्य बन्धः कल्पनीयः ॥५०॥

अथ च--

गतिश्रुतिरप्युपाधियोगादाकाशवत् ।
न कर्मणाऽप्यतद्धर्मत्वात् ।
अतिप्रसक्तिरन्यधर्मत्वे ।
निर्गुणादिश्रुतिविरोधश्चेति ॥ ५१-५४॥

एषां सूत्राणामेकवाक्यताऽस्ति--

(गतिश्रुतिः) या खलु तद्विषयेऽधमा गतिश्रुतिरस्ति "असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्यापिगच्छन्ति ये के चात्महनो जनाः" ॥ यजु० ४०।३ ) "पापेन पांप लोकं नयति" ( प्रश्नो० ३।७ ) सा ( उपाधियोगात्-आकाशवत् ) उपाधिरुपाधानमाश्रयः संसर्गस्तद्योगात्तत्सम्बन्धाद् भवति किलाकाशवत्, यथाऽऽकाशो मलिनः। नह्याकाशो मूर्तोऽस्ति तत्र मलिनत्वमुपाधियोगादेव भवति तथैवात्मन्यपि गतिश्रुतिरुपाधियोगात्-उपाधानयोगादाश्रययोगात् सूक्ष्मशरीरयोगात्, स्वरूपतो न। पुनश्च सा विशेषगतिः पापकर्महेतुत्वात् (कर्मणा-अपि न) कृतेन कर्मणा ऽऽत्मनि सम्भवतीत्यपि न वक्तुं शक्यते, यतः ( अतद्धर्मत्वात् ) कर्म हि खलु नात्मधर्मः किन्त्वहङ्करादिधर्मः कर्म, यदा कर्म हि नात्मधर्मः पुनस्तन्निष्पन्ना गतिः कुतः स्यादात्मनो बन्धकारणं कर्म हि न बन्धकारणं भवतीति पूर्वोक्तत्वात्, अन्यस्य धर्मेण बन्धयोगे (अतिप्रसक्तिः-अन्यधर्मत्वे) भवेदतिप्रसङ्गोऽन्यस्य धर्मेण बन्धयोगे पुनश्च ( निर्गुणादिश्रुतिविरोधश्चेति ) "असङ्गो ह्ययं पुरुषः" (बृह० ४।३।१५) इति निर्गुणत्वादिप्रतिपादिकायाः श्रुतेर्विरोधो भवति तस्माद् गतियोगादपि बन्धो न ॥ ५१-५४ ॥

अन्ततश्च--

तद्योगोऽप्यविवेकान्न समानत्वम्* ॥५५॥

(तद्योगः) स एकोनविंशतितमसूत्रप्रदर्शितः प्रकृतिपुरुषयोगः (अपि-अविवेकात्) अपि सम्भावनायाम्, अविवेकात्–अयथार्थज्ञानान्मिथ्याज्ञानात् स्वात्मनस्तथा प्रकृतेश्चास्वरूपज्ञानाद् भवति, तद्योगः प्रकृतिपुरुषयोगस्तत्पृथक्-पृथक्स्वरूपाज्ञानसम्भवः ( न समानत्वम् ) तस्मात् बन्धकारणविचारे पूर्वोक्तकालादिकेन तथा तद्योगे प्रकृतिपुरुषयोगविमर्शे च भिन्नभिन्नहेतुवादेन सहास्य विवेकहेतुप्रदर्शनस्य न समानत्वं दोषसमानत्वं यतो यस्याविवेकस्तस्य बन्धनिमित्तभूतो योगस्तद्योगः प्रकृतिपुरुषयोगः प्राप्तविवेकस्य तद्योगो नात एव बन्धाभावे मुक्तो भवति सः। प्राप्तविवेकं न कालादिर्बध्नीयात् तथा न क्षणिकवादविज्ञानशून्यवादवदव्यवस्थां गच्छेत्। अत्रत्यस्य 'तद्योगः' शब्दस्यार्थोऽनिरुद्धवृत्तौ धर्माधर्मयोगः कृतोऽन्यथार्थो यतः स एव प्रकृतः पूर्वतस्तद्योगः प्रकृतिपुरुषयोगो ऽत्रापि बन्धकारणनिर्णयसमाप्तये पुनरुक्तः। विज्ञानभिक्षुभाष्ये तु तद्योगस्यार्थोऽस्मद्वत् प्रकृतिपुरुषसंयोगोऽत्र सूत्रे कृतः परन्तु तत्रैकोनविंशे सूत्रे नेत्थमर्थो विहितस्तत्र तद्योगादृते प्रकृतिसंयोगंविना खलूक्तस्तत्रपूर्वत्रापि प्रकृतिपुरुषयोगोऽर्थो विधातव्य आसीत् ॥ ५५ ॥

कथं तर्हि तदुच्छित्तिरित्यत्रोच्यते--

नियतकारणात्तदुच्छित्ति ध्वान्तवत् ॥५६॥

( तदुच्छित्तिः-नियतकारणात् ) तस्याविवेकस्य नाशः खलु भवति नियतकारणात् तत्प्रतिद्वन्द्वित्वं भजमानाद् विवेकाद् यस्मिन् ह्यसति तत्प्रवृत्तिर्भवति सति च निवर्तते। कथमिव। उच्यते ( ध्वान्तवत् ) यथा हि ध्वान्तस्यान्धकारस्य नाशो भवति तत्प्रतिद्वन्द्विभूतात् प्रकाशात् प्रकाशो ह्यन्धकारस्य प्रतिद्वन्द्वित्वादन्धकारस्य नाशाय नियतकारणं तथैवाविवेकस्य नाशाय विवेको नियतं कारणं तत्प्रतिद्वन्द्वित्वात् ॥ ५६ ॥

ननु प्रकृतिपुरुषयोगोऽविवेकात् तद्विषयकाविवेकोच्छेदो भवतु विवेकात् किन्तु प्रकृतिपुरुषाभ्यामतिरिक्तानां महदादीनां शरीरान्तर्भूतानां बुद्ध्यादीनां विषये त्वविवेकोऽवस्थास्यते हि पुनः सोऽनिष्टं कुर्यात्, अत्रोच्यते--

*'तद्योगो, पाठो विज्ञानभिक्षोः। अनिरुद्धस्य तु तद्योगे'।

प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥५७॥

( प्रधानाविवेकात् ) प्रधानस्य मुख्यस्य पदार्थस्य प्रकृतेः पुरुषस्य चाविवेकात् खलु ( अन्याविवेकस्य ) अन्यविषयकाविवेकस्य गौण-विषयकाविवेकस्य सम्भवः ( तद्धाने हानम् ) तस्य प्रधानस्य मुख्यस्या-विवेकहाने गौणविषयकाविवेकस्य हानं नाशो भवति ॥ ५७ ॥

असङ्गोऽयं पुरुष उच्यते पुनः कथमसङ्गे पुरुषेऽविवेकप्रसङ्गः, इत्याकांक्षायामुच्यते—

वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः ॥५८॥

( वाङ्मात्रं तु न तत्त्वम् ) पुरुषेऽविवेकप्रतिपादनं कथनमात्र-मुपचर्यमाणं तु भवति हि न तत्त्वं-न तात्त्विकम् ( चित्तस्थितेः ) चित्तशब्दोऽन्तःकरणार्थः । तस्याविवेकस्य चित्तेऽन्तःकरणेऽवस्थानात् । अन्तःकरणद्वारकमनुभवत्यविवेकं पुरुषः ॥ ५८ ॥

तर्हि स एतादृशोऽविवेकस्तु श्रवणेनैव निवर्तिष्यते किं विवेकदर्शना-भ्यासेन महताऽध्यात्मप्रयासेन । अत्रोच्यते—

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥५९॥

(युक्तितः–अपि न बाध्यते ) किं श्रवणेन स्यात्, श्रवणमात्रस्य तु का कथा स तु युक्तितोऽर्थान्मननादपि न निवर्त्यते ( दिङ्मूढवत्-अपरोक्षात्-ऋते ) दिशोविषये मूढो दिङ्मूढस्तस्य दिशामोहवतो दिग्भ्र-मवतो मनुष्यस्येव यथा तस्य दिग्भ्रमो साक्षात् सूर्योदयदर्शनेन विना न निवर्तते तद्वत् सोऽविवेकोऽपि नापगच्छति स्वप्रतिद्वन्द्विना विवेक-दर्शनाभ्यासेन विना ॥५९॥

अथ स विवेकप्रकारो वर्ण्यते—

अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः ॥६०॥

(अचाक्षुषाणाम्-अनुमानेन बोधः) अप्रत्यक्षाणां बोधो विवेको भव-त्यनुमानेन प्रमाणेन । कथम् । उच्यते (धूमादिभिः–इव वह्नेः) यथा धूमा-दिभिर्धूमविस्फुलिङ्गचटचटाशब्दैरप्रत्यक्षस्याग्नेर्बोधो विवेकोऽनुमानाज्जा यते । तत्र प्रत्यक्षपदार्थास्तु स्थूलभूतानि देहादयश्चाथाप्रत्यक्षास्तद्भिन्ना अन्ये प्रकृत्यादयः शेषाः सन्ति ॥६०॥

अनुमानेन विवेकप्राप्तये तेषां प्रत्यक्षाणां कार्यकारणभावः प्रदर्श्यते—

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ॥६१॥

( सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः ) सत्त्वरजस्तमांसि प्रकाशद्रवत्वस्तब्धत्वमयानि प्रकाशगतिस्थितिरूपशक्तिभूतानि वस्तूनि तेषां यद्वा यैर्जगति प्रकाशद्रवत्वस्तब्धत्वानि प्रकाशगतिस्थितयो वा प्रवर्तन्ते तथाविधानां वस्तुशक्तिरूपाणां साम्यावस्था समावस्था निश्चेष्टा सरलाऽनुद्भूतस्वरूपाऽवस्था प्रकृतिरुच्यते ( प्रकृतेः-महान् ) ततः प्रकृतेर्महत्तत्त्वमुद्भवति ( महतः-अहङ्कारः ) महत्तत्त्वादहङ्कारनामा प्रकृतेर्द्वितीयो विकारो जायते ( अहङ्कारात् पञ्चतन्मात्राणि-उभयम्-इन्द्रियम् ) अहङ्काराद् बाह्ये जगति पञ्चतन्मात्राणि सूक्ष्मभूतानि देहे ज्ञानकर्मेन्द्रियगणश्च सम्भवति (तन्मात्रेभ्यः स्थूलभूतानि) सूक्ष्मभूतेभ्यः पृथिव्यादीनि स्थूलभूतानि व्यज्यन्ते ( पुरुषः ) पुरुषश्च तेचनसत्ता तद्भिन्ना ( इति पञ्चविंशतिः-गणः ) इत्येष पञ्चविंशतिर्गणो बोध्यो विज्ञेयो विवेचनीयो विवेकेऽपेक्षणीयोऽस्ति ॥६१॥

तत्रानुमानप्रकारः प्रातिलोम्येन--

स्थूलात् पञ्चतन्मात्रस्य ॥६२॥

(स्थूलात् ) पृथिव्यादिस्थूलभूतगणात् कार्यात् तत्कारणस्य ( पञ्चतन्मात्रस्य) सूक्ष्मभूतगणस्याविशेषस्यानुमानेन बोधो विवेकः कार्यः ॥६२॥

पुनः--

बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥६३॥

( बाह्याभ्यन्तराभ्यां तैः-च ) बाह्याभ्यन्तराभ्यामिन्द्रिगणाभ्यां तथा तश्च पञ्चतन्मात्रैः ( अहङ्कारस्य ) अहङ्कारस्यानुमानेन बोधो विवेकः कार्यो यदेषां वृत्तिसंस्कारो यत्र तिष्ठति सोऽहङ्कारोऽस्ति हि । तन्मात्राणां च संहतसूक्ष्मभावो यस्मिन् भवति ॥६३॥

पश्चात्--

तेनान्तःकरणस्य ॥६४॥

( तेन ) अहङ्कारेण कार्येण ( अन्तःकरणस्य ) तत्कारणभूतस्य महत्तत्त्वस्यानुमानेन बोधो विवेकः कार्यो यद्बाह्यप्रसारतः केन्द्रसंङ्काचो यस्मिन् भवति ॥६४॥

तदनु--

ततः प्रकृतेः ॥६५॥

(ततः प्रकृतेः ) ततो महत्तत्त्वात् कार्यात् तत्कारणभूतायाः प्रकृतेरनुमानेन बोधो विवेकः कार्यः सर्वथा निस्तब्धत्वं यस्मिन् भवति ॥६५॥

कार्यकारणप्रक्रियामनुसृत्य प्रकृतिपर्यन्तोऽनुमानप्रकारो दर्शितोऽत्रेदानीं पुरुषस्य बोधायानुमानप्रकारः प्रदर्श्यते--

संहतपरार्थत्वात् पुरुषस्य ॥६६॥

(संहतपरार्थत्वात् पुरुषस्य) सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः सा च त्रिगुणसंहता तत्कार्याणि च महत्तत्त्वादीनि संहतानि सन्त्यन्योऽन्यसंहतानि तर्हि प्रकृतिपर्यन्तानि सर्वाणि वस्तूनि संहतानि, संहतं हि परार्थं भवति "परार्थं संहत्यकारित्वात्" (योग० ४।२४) तस्य संहतस्य वस्तुजातस्य परार्थत्वात् स परोभूतः पुरुषोऽस्तीति तस्य पुरुषस्यानुमानेन बोधो विवेकः सम्पद्यते ॥६६॥

या खलु प्रकृतिर्महदादेर्विकारजातस्य मूलमुक्तं किं तस्याः प्रकृतेरपि मूलेन भवितव्यं न वेत्याकांक्षायामुच्यते--

मूले मूलाभावादमूलं मूलम् ॥६७॥

(मूले मूलाभावात् ) मूले तन्मूलस्याभावो भवति । तस्मात् (अमूलंमूलम् ) मूलं भवत्यमूलं मूलस्य नहि मूलं कल्पनीयम्, प्रकृतिरेव महदादेर्मूलं नहि तस्या मूलभूताया अपि मूलेन भाव्यम् ॥६७॥

मूलस्याप्यन्यमूलकल्पनायाम्--

पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥६८॥

(पारम्पर्ये-अपि) मूलभूतायाः प्रकृतेरपि परं मूलमन्यदिति कल्पनायां पुनस्तस्मादपि परं तन्मूलमन्यत्पुनस्तस्मात्परमन्यदिति मूलपरम्परा प्रसज्यते तत्रेत्थं पारम्पर्ये परम्परमिति प्रवाहेऽपि (एकत्र परिनिष्ठा-इति संज्ञामात्रम् ) कस्मिंश्चिदेकस्मिन् वस्तुनि परिसमाप्तिः कथनपरिसमाप्तिर्वा विचारपरिसमाप्तिस्तु भविष्यत्येवानवस्थादोषपरिहाराय तर्हि यस्मिन् समाप्तिस्तन्मूलं सर्वतोमूलममूलं प्रकृतिर्वाच्येति गतं भिन्ननाम्नि संज्ञामात्रभेद एव न मूलत्वभेदो न मूलस्यामूलत्वभेदश्च ॥६८॥

प्रकृतेः संहतपरार्थत्वे पूर्वपक्ष उत्थाप्यते--

समानः प्रकृतेर्द्वयोः ॥६९॥

(प्रकृतेः-द्वयोः समानः) प्रकृतेरिति पञ्चमीनिर्देशः । प्रकृतिसकाशाद् द्वयो र्मुक्तबद्धयोः पुरुषयोः समानोऽर्थलाभोऽस्ति प्रकृतिर्हि परमार्था पुरुषार्था तच्चेदमुक्तमेवानन्तरसूत्रे "संहतपरार्थत्वात् पुरुषस्य" [६६] तथैव योगदर्शनेऽपि" परार्थं संहत्यकारित्वात्" (योग० ४।२४) तेन समानोऽर्थः सिध्येत् प्रकृतिसकाशाद् द्वयोर्मुक्तबद्धयोः पुरुषयोः कथं कस्मैचिदपवर्गफलं कस्मैचिद् भोगः फलमभिव्यज्यते। 'द्वयोः' इत्यस्यार्थोऽनिरुद्धवृत्तौ 'वादिप्रतिवादिनोः' विज्ञानभिक्षुभाष्ये 'वादिप्रतिवादिनोः अथवा प्रकृतिपुरुषयोः' अथःकृतः, उभयत्राप्यर्थायुक्तिः । नह्यत्र वादिप्रतिवादिनौ प्रत्यक्षं सूत्रे प्रसज्येते। अग्रिमसूत्रासाङ्गत्यं चापतति तथाथविधाने तस्मात्तयो र्न युक्तार्थकारिता ॥६९॥

समाधत्ते--

अधिकारित्रैविध्यान्न नियमः ॥७०॥

( अधिकारित्रैविध्यात् ) अधिकारिणामुत्तममध्यममन्दरूपत्रिविधत्वात् ( न नियमः ) समानार्थसाधनस्य नियमो न भवति, तत्रोत्तमाधिकारी क्षिप्रं मुक्तो भवति मध्यमाधिकारी चिरेणानेकजन्मजन्मान्तराण्यतिवाह्य मुक्तिभाग्भवति मन्दस्तु बद्धः सन् भोगमेवानुधावति ॥७०॥

कार्यकारणभावमाश्रित्यानुमानेन प्रकृतेरप्रत्यक्षायाः पुनः प्रकृतितद्विकाराणां च संहतत्वमवलम्ब्य पुरुषस्य च विवेकप्रकारं प्रदर्श्येदानीं प्रकृतेः पूर्वापरकार्यक्रमनाह-

महदाख्यमाद्यं कार्यं तन्मनः ॥७१॥

(महदाख्यम्-आद्यं कार्यम् ) 'प्रकृतेर्महान्' इत्युक्तं तन्महदाख्यं प्रकृतेराद्यं कार्यमस्ति (तन्मनः) तच्च सामष्टिकं मनो मननसाधनमध्यवसायात्मकमन्तःकरणम् ॥७१॥

चरमोऽहंकारः ।७२।

(चरमः-अहङ्कारः) 'महतोऽहङ्कारः' इति य उक्तः स महत्तत्त्वतश्चरमस्तत्पश्चाद्भूतः कार्यत्वमापन्नोऽहङ्कारोऽस्ति ॥७२॥

तत्कार्यत्वमुत्तरेषाम् ॥७३॥

(उत्तरेषां तत्कार्यत्वम्) 'अहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियम्' इत्येषामुत्तरेषां तत्कार्यत्वमहङ्कारकार्यत्वं पुनश्च तन्मात्रकार्याणां स्थूलभूतानां तत्कार्यत्वं तन्मात्रकार्यत्वमित्यप्युक्तं भवति ॥७३॥



तदत्र–

आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥७४॥

(पारम्पर्ये–अपि) प्रकृतेः कार्यं महत्तत्त्वं तस्य कार्यमहङ्कारोऽहङ्कारस्य कार्यं तन्मात्राणि तन्मात्राणां कार्याणि स्थूलभूतानीति कार्यपारम्पर्येऽपि (तद्द्वारा-आद्यहेतुता) उक्तकार्यकारणप्रवाहद्वाराऽऽद्यहेतुता, आदौ भव आद्यः, आद्यश्च हेतुराद्यहेतुस्तस्य भाव आद्यहेतुता प्राथमिककारणता (अणुवत्) अणुवद्विज्ञेयाऽन्वेष्या यथा कस्यचिन्महत्परिमाणवतः कार्यवस्तुनो घटादिकस्य कारणतायामणुस्तस्यात्यन्तसूक्ष्मभाग आद्यं कारणं भवति तथैवात्रापि निर्णेतव्याऽऽद्यकारणता यदतः परं किं सूक्ष्मं पुनस्ततः परं किमिति प्रातिलोम्येन ॥७४॥



पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥ ७५ ॥

(द्वयोः पूर्वभावित्वे) प्रकृतिपुरुषयोरखिलकार्यात् पूर्वसत्तावत्त्वे सति (एकतरस्य हाने) एकतरस्यैकस्याऽखिलाद्यहेतुताहाने प्राथमिककारणत्वासिद्धौ (अन्यतरयोगः) तद्भिन्नस्याद्यहेतुतायोगः प्राथमिककारणत्वयोगो विज्ञेयः। तत्र पुरुषे न पारम्पर्येणाणुत्वमस्ति, यथा योगदर्शनस्य व्यासभाष्ये सूचितम् "पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं तैजसस्य रूपतन्मात्रं वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रमिति, तेषामहङ्कारः, अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः, लिङ्गस्यालिङ्गं सूक्ष्मो विषयः, न चालिङ्गात्परं सूक्ष्ममस्ति, यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य किन्तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति, अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम्" (योग० १।४५ व्यासः) तस्मादखिलकार्यजाते प्रकृतेराद्यहेतुता प्राथमिकारणतेति गतम् ॥ ७५ ॥

प्रकृतेराद्यहेतुता प्रतिपाद्यतेऽणुवदितिदृष्टान्तेन तर्ह्यणुरेव भवतु सर्वस्य जगत आद्यहेतुरित्याकांक्षायामुच्यते--

परिच्छिन्नत्वान्न सर्वोपादानम्* ॥ ७६ ॥

( परिच्छिन्नत्वात् ) अणोः परिच्छिन्नत्वादेकदेशित्वात् ( सर्वोपादानं न ) सर्वस्य जगत उपादानं न भवितुमर्हति, एकैकस्य घटादिकस्य वस्तुनः पार्थिवादिकस्य पदार्थस्य वा तत्तदणुः स्यादुपादानं कारणं न सर्वेषां वस्तूनां पार्थिवाप्यतैजसवायव्याकाशीयानां पदार्थानामणुरेकः सर्वोपादानं भवति किन्तु प्रत्येकस्य पृथक्-पृथक् पदार्थस्य पृथक्पृथगेवाणुरुपादानं भवितुमर्हेत् सर्वोपादानं न। तस्मात् प्रकृतिरेव सर्वोपादानं तस्या एव सर्वोपादानत्वादाद्यहेतुतासम्भवः ॥ ७६ ॥

पुनश्च--

तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥

( तदुत्पत्तिश्रुतेः-च ) उत्पत्तिरत्र न भावनिर्देशः किन्तु कर्मनिर्देशः, क्तिन् प्रत्ययस्य कर्मण्यपि विधानात् । तस्मात्-उत्पत्तिरर्थात् सृष्टिः, तदुत्पत्तिश्रुतेस्तत्सृष्टिश्रुतेः, तच्छब्देन सैव प्रकृतिगृह्यते या प्रक्रियते, प्रकृतेः सृष्टिश्रुतेः प्रकृतेर्विकृतिविषयिका श्रुतिरस्तीति हेतोश्च प्रकृतिरेव सर्वोपादानमाद्यहेतुः । श्रुतिः खलु "तम आसीत् तमसा गूढमग्रेऽप्रकेतं सर्वं सलिलमा इदम् । तुच्छ्येनाभ्वपिहितं यदासीत्तन्महिना जायतैकम् ॥" ( ऋ० १०।१२९।३ ) 'आभु' अपिहितं यदासीत्तन्महिना जायतैकम् । यत् 'आभु' आसीत् तत उत्पत्तिश्रुतिः, तदेवैकं जायते महिना महत्तत्त्वरूपेण प्रथमा विकृतिः सृष्टिः । "इयं विसृष्टिर्यत आबभूव" ( ऋ० १०।१२९।७ ) यत्पूर्वमुक्तम् 'आभु' ततः 'आबभूव सृष्टिः' इति कथनं च योगानुसारि । "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत" ( बृह० १।४-७ ) "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" (श्वेता० ४।५) "प्रधानाज्जायते सृष्टिः" इति श्रुतिनाम्नाऽनिरूढवृत्तौ कुतश्चिदुद्धृतं वचनम् ॥७७॥

प्रकृतेरदृश्यत्वात्सा न वस्तु तर्हि स्यादवस्तुनः सृष्टिः । उच्यते--

नावस्तुनो वस्तुसिद्धिः ॥७८॥

( अवस्तुनः-वस्तुसिद्धिः-न ) अवस्तुनोऽभावात्-अभावरूपात् खलु वस्तुसिद्धिर्जगद्रूपवस्तुसिद्धिर्न भवति । तस्माज्जगत उपादानकारणं प्रकृतिर्वस्तुरूपा नाभावरूपा ॥७८॥

---

*अत्र सूत्रे 'परिच्छिन्नत्वान्न' पाठोऽनिरुद्धानुसारतः । 'परिच्छिन्नं न' विज्ञानभिक्षुपाठः ।

जगदपि खल्ववस्तु भवतु । अत्रोच्यते--

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥७९॥

( अबाधात्-अदुष्टकारणजन्यत्वात्-च ) जगतोऽबाधात् , प्रमाणेन जगतो बाधो न भवति किन्तु प्रत्यक्षादिभिः प्रमाणैरुपलभ्यते तथाऽदुष्टकारणजन्यमपि न जगत् , यथा कामलादिनेत्रदोषात् पीतशङ्खप्रतीतिर्भवति । तस्मात् ( अवस्तुत्वं न ) जगतोऽवस्तुत्वं न किन्तु वस्तुरूपमेवास्ति, तेन वस्तुत्वे सति जगतस्तस्य कारणेनापि वस्तुना भाव्यं यतो नावस्तुनो वस्तुसिद्धिः ॥७९॥

तस्मात्--

भावे तद्योगेन तत्सिद्धिरभावे तदभावात्
कुतस्तरां तत्सिद्धिः ॥८०॥

( भावे ) कारणस्य वस्तुत्वे सति ( तद्योगेन ) तत्सम्बन्धेन ( तत्सिद्धिः ) कार्यस्यापि वस्तुत्वसिद्धिर्भवति ( अभावे ) कारणस्याभावेऽवस्तुत्वे ( तदभावात् ) तदभावयोगात् ( कुतस्तरां तत्सिद्धिः ) कुतो हि जगत्सिद्धिर्भवेन्न कुतोपीत्यर्थः । अस्ति हि जगत् तस्मात् प्रकृत्याख्येन भावपदार्थेन जगत्कारणेन भवितव्यमेव ॥८०॥

अथ--

न कर्मण उपादानत्वायोगात् ॥८१॥

( न कर्मणः ) यदि केनचित्कल्प्येत काऽऽवश्यकता भावरूपायाः प्रकृतेर्जगत्सिद्धौ यस्या विवेकोऽपेक्ष्येत भवतु कर्मणो जगत्सिद्धिः । तर्हि न कर्मणो जगत्सिद्धिः सम्भवति । यतः ( उपादानत्वायोगात् ) कर्मणो द्रव्यनिष्ठत्वाद् द्रव्याद्भिन्नं न तत् स्वसत्ताकं भवतु तत् कार्यस्य लक्षणं न तूपादानं तस्याद्रव्यत्वादुपादानत्वायोग्यत्वमस्ति । उपादानं तु तदेव भवति यद्रूपान्तरत्वमादत्ते परिणमते कर्म तु द्रव्यस्थं यावत्कर्मणोऽन्तः स्यात् तावदेवावतिष्ठते न स्थायि किन्तु प्रकृतेरेव परिणामो जगत् तस्मात् प्रकृतेर्विवेकोऽपेक्ष्यते हि ॥८१॥

नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्ति-
योगादपुरुषार्थत्वम् ॥८२॥

( आनुश्रविकात्-अपि तत्सिद्धिः-न ) अनुश्रयते वेदादित्यानुश्रविकः,

अनुश्रवो वेदोपदेशः । न भवतु कर्म जगत उपादानं किन्तु प्रकृतिर्जगत उपादानं पुनः प्रकृतेर्विवेकोऽपेद्यते–इत्युच्यते परन्तु यदानुश्रविकं कर्म तस्मान्मोक्षसिद्धिर्भविष्यतीति प्रसङ्गे खलूच्यते–आनुश्रविकाद् वैदिक-कर्मणोऽपि मोक्षसिद्धिर्न भविष्यति । यतः ( साध्यत्वेन ) यथा लौकिक-कर्मणः फलं साध्यकोटौ तद्वद्वैदिककर्मणः फलमपि साध्यकोटौ साध्यत्वेन फलक्षयप्रसङ्गः । उच्यते च "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवा-मुत्र पुण्यचितो लोकः क्षीयते" (छान्दो० ८।१।६) पुनः (आवृत्तियोगात्) पुरुषस्यावृत्तियोगो भविष्यति । अतः ( अपुरुषार्थत्वम् ) अपुरुषार्थत्वं स्यात् ॥८२॥

किन्तु--

तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥८३॥

(तत्र) प्रकृतिपुरुषविषये (प्राप्तविवेकस्य) प्राप्तो विवेको येन विदुषा तस्य (अनावृत्तिश्रुतिः) अनावृत्तिश्रुतिरस्ति "तपसा ब्रह्मचर्येण श्रद्धया विद्यया-ऽऽत्मानमन्विष्य······एतममृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" ( प्रश्नो० १।१० ) ॥८३॥

विवेकमन्तरेण कर्मणा तु--

दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोक्षः❀ ॥८४॥

(दुःखात्–दुःखम्) विवेकमन्तरेणानुश्रविककर्मणस्तु दुःखाद्दुःखमाप्नु-यात्, एकं दुःखं निवृत्तमपरं दुःखमुपतिष्ठते तन्निवृत्तौ पुनरपरं दुःखमार्तते। एवम् (जलाभिषेकवत्-जाड्यविमोक्षः-न) यथा जलाभिषेकाज्जाड्यार्तस्य त्वग्विष्टब्धरोगयुक्तस्य विष्टब्धगात्रस्य शीतेन पीडितस्य वा जाड्यविमोक्षो न भवति ॥८४॥

काम्ये कर्मणि भवतु संसारदुःखसम्पर्को न त्वकाम्ये, तेनाका-म्येन कर्मणा स्यादेव विमोक्षः । अत्रोच्यते—

काम्याकाम्येऽपि साध्यत्वाविशेषात् ॥८५॥

(काम्याकाम्ये-अपि) विवेकमन्तरेण काम्ये वाऽकाम्येऽपि कर्मणि तथैव दुःखप्रसङ्गो भवति न विमोक्षः ( साध्यत्वाविशेषात् ) फलस्यावरत्वात क्षयित्वाच्च ॥८५॥

❀ विमोक्षः, इतिपाठोऽनिरुद्धस्य । विमोकः, विज्ञानभिक्षोः ।

विवेकस्य साधनत्वे मोक्षफलक्षयो नेत्याह--

निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ।।८६।।

(निजमुक्तस्य) स्वरूपतो मुक्तस्य पुरुषस्य (बन्धध्वंसमात्रं परम्) विवेकात् खलु बन्धस्य ध्वंसमात्रं भवति तदेव परमभीष्टमत्यन्तपुरुषार्थत्वं मोक्षो वेति ( न समानत्वम् ) तत्रान्यैः साध्यफलैः सहास्य न समानत्वमस्ति नहि मोक्षस्य तद्वत्क्षयप्रसङ्गः ।।८६।।

विवेकसम्पादनाय सन्ति प्रमाणान्यपि साधनत्वेनोपयुक्तानीत्युच्यते–

द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा,तत्साधकतमं यत्तत्+ त्रिविधं प्रमाणम्* ।

तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥८७-८८॥

एतयोः सूत्रयोरेकवाक्यताऽस्ति--

(द्वयोः–एकतरस्य वा-अपि) प्रकृतिपुरुषयोर्विवेकाय यद्वैकतरस्य पदार्थस्य प्रकृतेः पुरुषस्य विवेकायापि ( असन्निकृष्टार्थपरिच्छित्तिः प्रमा ) अनधिगतार्थस्य परिनिष्ठा परिज्ञानं निश्चयः प्रमाऽपेक्ष्यते (तत्साधकतमं-यत् तत् त्रिविधं प्रमाणम् ) तस्य साधकतमं यत् तत् त्रिविधं प्रमाणं भवति ( तत्सिद्धौ सर्वसिद्धेः ) शास्त्रान्तरेषु स्युरधिकानि प्रमाणानि किन्त्वत्र तु त्रिविधप्रमाणसिद्धौ त्रिविधप्रमाणस्वीकारे त्रिविधप्रमाणव्यवहारे सर्वसिद्धेः प्रकृतिपुरुपविवेकयोग्यसर्वार्थसिद्धेः (न-आधिक्यसिद्धिः) प्रमाणत्रयादधिकस्य सिद्धिरत्र सांख्यप्रक्रियायां नापेक्ष्यते ।।८७-८८।।

तत्र प्रमाणत्रये विभाग उच्यते लक्षणं चैकैकस्य प्रदर्श्यते ।

प्रथमम्—

यत्सम्बन्धसिद्धं× तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ।।८९।।

(यत्सम्बन्धसिद्धम् ) यस्य सम्बन्धो यत्सम्बन्धस्तेन सिद्धं यत्सम्बन्धसिद्धम् । यस्य वस्तुनः सम्बन्धेन सिद्धं पुरुषेऽधिगतम् ( तदाकारोल्लेखि विज्ञानम् ) तद्वस्तुस्वरूपोद्भासि विज्ञानं भवति ( तत् प्रत्यक्षम् ) तत् प्रत्यक्षं प्रमाणम् ।। ८९ ।।

अतः प्रत्यक्षलक्षणे यत्सम्बन्धसिद्धमित्येवोक्तं पुरुषस्य वस्तुना सह

---

+ अनिरुद्धवृत्तावत्रपर्यन्तं सूत्रं पूर्वम्, विज्ञानभिक्षुभाष्ये तु *खल्वत्रपर्यन्त सूत्रंपूर्वम्

× 'यत्सम्बन्धसिद्धम्' पाठोऽनिरुद्धस्य, 'यत्सम्बद्धं सत्' विज्ञानभिक्षोः ।

सम्बन्धद्वारप्राप्तं ज्ञानं प्रत्यक्षं लक्षितं स वस्तुसम्बन्धः पुरुषस्य केनोपकरणेन भवतीति तूक्तमेव न तेनात्र प्रत्यक्षलक्षणे दोषः प्रतिभातीति भ्रान्तिरपाक्रियते--

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥९०॥

( योगिनाम्-अबाह्यप्रत्यक्षत्वात् ) योगिनामबाह्यप्रत्यक्षमनिन्द्रियप्रत्यक्षमान्तरिकप्रत्यक्षं भवति तदप्यनेन गृहीतं स्यात्। संसारिणां बाह्यं प्रत्यक्षं बाह्येन्द्रियेण वस्तुसम्बन्धजनितं भवति योगिनां प्रत्यक्षं तु खल्वबाह्यप्रत्यक्षमान्तरिकप्रत्यक्षमन्तःकरणेन वस्तुसम्बन्धसिद्धं भवति। अत्रास्माकं प्रत्यक्षलक्षणे 'यत्सम्बन्धसिद्धम्' इति सम्बन्धसिद्धत्वलक्षणं तूभयेषां संसारिणां योगिनां च प्रत्यक्षे समानमतो न दोषो यतो योगिनामबाह्यप्रत्यक्षमपि गृहीतं स्यादनेन प्रत्यक्षलक्षणेनेति सांख्यानां प्रत्यक्षलक्षणपरिभाषायामित्याशयः । अनिरुद्धवृत्तौविज्ञानभिक्षुभाष्ये चास्मात् पूर्वं प्रत्यक्षलक्षणकं सूत्रं बाह्यप्रत्यक्षलक्षणपरमैन्द्रियिकप्रत्यक्षलक्षणपरं व्याख्यातम्, अत एवोक्तं ताभ्यां यत् "बाह्यप्रत्यक्षलक्षणमिदं लौकिकम्, योगिप्रत्यक्षन्तु-अबाह्यं लौकिकं च" (अनिरुद्धः) "ऐन्द्रियिकप्रत्यक्षमेवात्र लक्ष्यं योगिनश्चाबाह्यप्रत्यक्षकाः" ( विज्ञानभिक्षुः ) इत्थमुभयत्रापि सूत्रमन्यथा हि व्याख्यातम्। पूर्वसूत्रे नेन्द्रियशब्द उपात्तः बाह्येन्द्रियेण वान्तःकरणेन वा सम्बन्धसिद्धं प्रत्यक्षमिति सामान्यलक्षणं 'यत्सम्बन्धसिद्धम्' पदेन सूचितमत एव तत्र सूत्रोक्ते प्रत्यक्षलक्षणे न दोषस्तत्र योगिप्रत्यक्षेऽपि तद्व्याप्तेरभीष्टत्वात् ॥ ९० ॥

पुनश्च--

लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ॥९१॥

( वा ) अथवा ( लीनवस्तुलब्धातिशयसम्बन्धात्-अदोषः ) लीनानां सूक्ष्माणामतीन्द्रियाणां वस्तूनां लब्धोऽतिशयोऽप्रतिबद्धो निरन्तर आत्मीकृतः सम्बन्धो भवति हि योगिनां यथोक्तं योगदर्शने "परमाणुपरममहत्त्वान्तोऽस्य वशीकारः" ( योग० १।४० ) इतिहेतोरुक्तप्रत्यक्षलक्षणेऽदोषो न दोषोऽस्ति । पूर्वसूत्रेऽन्तःकरणसम्बन्धसिद्धत्वाद् दोषपरिहारोऽत्र सूत्रे निरन्तरात्मसम्बन्धसिद्धत्वाद् दोषनिराकरणमिति विशेषः। अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चात्र प्रत्यक्षलक्षणप्रसङ्गे नितान्तासत्यकल्पना कृता। तत्र "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" [ ९० ] इति सूत्रमुभयत्र पूर्वप्रत्यक्षलक्षणाद् भिन्न-

विषयकं व्याख्यातं यत् पूर्वत्वैन्द्रियिकस्य बाह्येन्द्रियसाध्यस्य लौकिकस्य प्रत्यक्षस्य लक्षणमुक्तं न योगिनां प्रत्यक्षस्याबाह्यस्य "बाह्यप्रत्यक्षलक्षण-मिदं लौकिकं योगिप्रत्यक्षं त्वबाह्यमलौकिकं च, अतो नाव्यापकत्वदोषः" ( अनिरुद्धः ) "ऐन्द्रियिकप्रत्यक्षमेवात्र लक्ष्यं योगिनश्चाबाह्यप्रत्यक्षकाः, अतो न दोषः" ( विज्ञानभिक्षुः ) पुनश्च "लीनवस्तुलब्धातिशयसम्ब-न्धाद्वाऽदोषः" ( ६१ ) इति सूत्रे योगिनां प्रत्यक्षस्यापि लक्षणं मतं तस्मि-न्नेवैकस्मिन् सूत्रे "अथवा लक्षणेन योगिप्रत्यक्षस्यापि संग्रह इति पक्षा-न्तरमाह--लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" ( अनिरुद्धः ) "वास्तवं समाधानमाह-लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" (विज्ञा नभिक्षुः ) किं यत् "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" ( ९० ) तथा "लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" ( ९१ ) इति सूत्रद्वयं पूर्वो-क्तस्य "यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्" ( ९० ) इति सूत्रस्य व्याख्यानभूतं सांख्यकाराद् भिन्नस्य कस्यचिद् व्याख्याकारस्य वचनं यत् "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" ( ९१ ) इति सूत्राद्-सन्तोषं प्राप्य पुनर्वास्तविकसमाधनम् "लीनवस्तुलब्धातिशयसम्बन्धा-द्वाऽदोषः" ( ९१ ) इति वचनं पुरः स्थापयति। किं सूत्रकारस्यावास्त-विकेन समाधानेनापि भाव्यं नैष शिष्टाचारः समाचारो वा तत्र साक्षा-त्कृतामृषीणाम्। पुनश्च "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" ( ९० ) तथा "लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" (९१) इति सूत्रे तु सांख्य-शास्त्रस्य स्तः, न हि कस्यचिद् व्याख्याकर्तुः। तस्मादनिरुद्धवृत्तौ विज्ञान-भिक्षुभाष्ये चैष प्रसङ्गोऽनवबुद्धयान्यथा व्याख्यातः । अतएवाग्रे "ईश्वरासिद्धेः" (९२) इति सूत्रव्याख्यानमप्ययुक्तं जातम् । वस्तुत ईश्वरसाधनायैव "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" (९०) तथा "लीन-वस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" (९१) इति सूत्राभ्यां योगिनामबाह्य-प्रत्यक्षस्याप्यन्तर्भावः पूर्वप्रत्यक्षलक्षणे स्यादिति कृत्वा "यत्सम्बन्धसिद्धं-तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्" (८९) सूत्रे 'यत्सम्बन्धसिद्धम्' सामान्यलक्षणपरं पदं रचितम् । यत ऐन्द्रियिकप्रत्यक्षेणेश्वरस्य सिद्धिर्न भवति तत्रेश्वरासिद्धिप्रसक्तिर्न भवेदत एव योगिप्रत्यक्षेण तत्सिद्धिर्भवे-दिति प्रत्यक्षस्य सामान्यं लक्षणं सूत्रे निर्दिष्टं यत्सम्बन्धसिद्धमिति। आश्चर्यं ह्येतत् "ईश्वरासिद्धेः" (९२) सूत्रावतरणे विज्ञानभिक्षुरैन्द्रियि-कप्रत्यक्षस्येश्वरसिद्धावव्याप्तिदोषं निराकरोतीश्वरनिषेधात् तस्येश्वरस्य "सन्निकर्षाजन्यत्वात्" इत्युक्त्वा परन्तु "सौक्ष्म्यादनुपलब्धिः" (१०९)

सूत्रे "योगजधर्मस्य चोत्तेजकतया प्रकृतिपुरुषादीनां प्रत्यक्षप्रमा भवति" (विज्ञानभिक्षुः) यद्येवं तर्हीश्वरविषये प्रत्यक्षस्याव्याप्तिपरिहारो व्यर्थो यतस्तस्यापि योगजधर्मेण प्रत्यक्षता सम्भवति ॥६१॥

स एष योगिनामबाह्यप्रत्यक्षप्रकारोऽवश्यं स्वीकार्यो यतो बाह्यप्रत्यक्षेण–

ईश्वरासिद्धेः ॥६२॥

( ईश्वरासिद्धेः ) ईश्वरस्यासिद्धिदोषप्रसङ्गात्–ईश्वरस्य सिद्धिर्बाह्य-प्रत्यक्षेणैन्द्रियिकप्रत्यक्षेण न भवति, नहि बाह्यप्रत्यक्षस्य विषय ईश्वरः, श्रुतिश्च वदति हीश्वरस्य प्रत्यक्षत्वम् "त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि" (तै० उ० १।१।१) एवं योगिनामबाह्यप्रत्यक्षमपेक्ष्यतेऽत एव सांख्ये प्रत्यक्षलक्षणं सामान्यं यद्योगिनां प्रत्यक्षेऽपि घटते, योगिनामबाह्यप्रत्यक्षेण भविष्यति हीश्वरसिद्धिः ॥६२॥

योगिनामबाह्यप्रत्यक्षमनपेक्ष्य साध्यते यदीश्वरस्तर्हि––

मुक्तबद्धयोरन्तराभावान्न तत्सिद्धिः ॥६३॥

(मुक्तबद्धयोः–अन्यतराभावात् ) तथाभूत ईश्वरो मुक्तबद्धयोरन्यतरस्माद् भिन्नो न भविष्यति स मुक्तो जीवन्मुक्तो बद्धो वा भविष्यति ताभ्यां भिन्नो न भविष्यति । एतेन (तत्सिद्धिः–न) योगिनामबाह्यप्रत्यक्ष-साध्यस्येश्वरस्यसिद्धिर्न भविष्यति, अस्ति योगिनां प्रत्यक्षीभूत ईश्वरो यथा च श्रुतिस्तस्य प्रत्यक्षत्वं वदति ॥६३॥

तत्र च––

उभयथाप्यसत्करत्वम् ॥६४॥

(उभयथा-अपि-असत्करत्वम् ) उभयथा प्रकारेणापि मुक्तस्य बद्धस्य चेश्वरत्वेऽसत्करत्वमैश्वर्यायोग्यत्वं जगद्रचनादिव्यवहारेऽकिञ्चित्करत्व-मस्ति मुक्तस्य प्रयोजनाभावादथ बद्धस्य सामर्थ्याभावात् ॥६४॥

यदि लोके कश्चिदीश्वरः प्रत्यक्षं प्रसिध्येत् तर्हि––

मुक्तात्मनः प्रशंसोपासासिद्धस्य वा ॥६५॥

(मुक्तात्मनः) जीवन्मुक्तस्य चरमदेहस्य (उपासासिद्धस्य वा) अथवा ध्यानोपासनया सिद्धिं प्राप्तस्य बद्धस्य [ यथाऽद्यत्वे जैनतीर्थङ्करनाम्ना पौराणिकावतारनाम्ना प्रसिद्धस्य–ब्रह्ममुनिः ] प्रशंसामात्रं न तु वस्तुत ईश्वरः स भवति । तस्मादीश्वरप्रत्यक्षार्थं योगिनामान्तरिकप्रत्यक्षस्यावश्य–

कताऽस्तीति हेतोरत्र योगिनामयोगिनामुभयेषां प्रत्यक्षस्य सामान्यं लक्षणं-कृतमतो नात्र प्रत्यक्षलक्षणे दोषः ॥९५॥

अस्तु तर्हि योगिनामान्तरिकप्रत्यक्षग्राह्यः पुरुषविशेष ईश्वरः क्लेश कर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" (योग० १।२४) यः खलु वैदिकसिद्धान्ते स्वीक्रियते, परन्तु तस्य नित्यशुद्धबुद्धमुक्तस्वभाववत्त्वात् कथमीश्वरत्वमधिष्ठातृत्वं चेत्याकांक्षायामुच्यते--

तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥

( तत्सन्निधानात्-अधिष्ठातृत्वं मणिवत् ) 'तत्' शब्देन पुरुषविशेषाद् भिन्ना प्रकृतिर्गृह्यते। प्रकृतिसन्निधानात् पुरुषविशेषे तत्रेश्वरेऽधिष्ठातृत्वमीश्वरत्वं कर्तृत्वं च भवति मणिवत्, यथा लोहसन्निधानादयस्कान्तमणेराकर्षणकर्तृत्वं भवति तथैव प्रकृतिसन्निधानात्पुरुषविशेषस्येश्वरस्याधिष्ठातृत्वं जगत्कर्तृत्वं चास्ति ॥९६॥

एवमेव--

विशेषकार्येष्वपि जीवानाम् ॥९७॥

(विशेषकार्येषु-अपि जीवानाम् ) अपि सम्भवार्थः सम्भवो युक्तता। रसरक्तमांसमेदोऽस्थिमज्जशुक्रादीनां रचनापरिपाकौ प्राणसञ्चारश्च इति नैसर्गिकं कार्यं विहाय विशेषेषु भिन्नेषु कार्येषु सन्निधानाज्जीवानामपि भवत्येवाधिष्ठातृत्वं तद्यथा मृत्तिकासन्निधानाद् घटनिर्मातृत्वम्, अन्नसन्निधानाद् भोजनपक्तृत्वम्, कार्पाससन्निधानाद् वस्त्रवातृत्वम्, प्राणिमात्रस्य स्वस्वखाद्यान्वेषयितृत्वं यथानुकूलं यथासम्भवं स्वस्वनीडबिलादिनिर्मातृत्वं तत्तत्साधनवस्तुसन्निधानाद् भवति हि ॥९७॥

भवतु प्रकृतिसन्निधानादीश्वरस्याधिष्ठातृत्वं प्रकृतिं जगद्रूपे परिणमयितुं परन्तु सर्गारम्भे जीवात्मनामन्तःकरणे वेदवाक्यार्थोपदेशस्तेभ्यः कर्मफलप्रदानं च कथं तेनेश्वरेण क्रियते-इत्याकांक्षायामुच्यते सूत्रद्वयेन—

सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः। अन्तःकरणस्य
तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥९८-९९॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति--

( सिद्धरूपबोद्धृत्वात् ) अत्र सिद्धशब्दो नित्यार्थः। नित्यशुद्धबुद्ध-

मुक्तस्वभावः पुरुषः, तस्य नित्यबुद्धस्वरूपत्वात् स्वरूपतो बोधकत्वात्। (वाक्यार्थोपदेशः) वेदवाक्यार्थोपदेशः खलूपपद्यते जीवात्मनामन्तःकरणे (अन्तःकरणस्य तदुज्ज्वलितत्वात्) जीवात्मनामन्तःकरणस्य तेन बोधकेनेश्वरेणोद्भासितत्वात् स्वकीयज्ञानेन विकासितत्वात् तत्र ज्ञानस्याविष्कृतत्वात् (लोहवदधिष्ठातृत्वम्) अन्तःकरणस्य तदुज्ज्वलितत्वादेव तेभ्यो जीवात्मभ्यः कर्मफलप्रदानायापि तेषामन्तःकरणस्य तेनेश्वरेणोज्ज्वलितत्वात् तस्येश्वरस्याधिष्ठातृत्वमस्ति। उक्तं यथा "जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" (छान्दो० ६।३।२) तच्चाधिष्ठातृत्वं लोहवत्, लोहे-इव लोहवत् "तत्र तस्येव" (अष्टा० ५।१।११६) तत्रेव वत् प्रत्ययः सप्तम्याम्। लोहे यथाऽग्निनोज्ज्वलितेऽग्नेरधिष्ठातृत्वं भवति स लोहं प्रविश्य नमयति तथैवेश्वरो जीवात्मनामन्तःकरणं कर्मफलाभिमुखं नयति ॥९८-९९॥

प्रत्यक्षप्रमाणस्य विषयः समाप्तः, योगिनामबाह्यप्रत्यक्षत्वात्—लीनवस्तुलब्धातिशयसम्बन्धाच्चेश्वरस्य योगिप्रत्यक्षविषयत्वं च साधितं प्रकृतिजीवात्मसु च तस्याधिष्ठातृत्वमपि व्यवस्थापितम्। अधुना तदग्रेऽवशिष्टप्रमाणविषयः प्रस्तूयते—

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥१००॥

(प्रतिबन्धदृशः) बन्धं बन्धं प्रति-प्रतिबन्धोऽनिवार्यसम्बन्धोऽविनाभावसम्बन्धस्तं पश्यतीति प्रतिबन्धदृक् तस्य प्रतिबन्धदृशोऽनिवार्यसम्बन्धदृशो यद्वाऽविनाभावसम्बन्धद्रष्टुर्नियतसम्बन्धद्रष्टुः (प्रतिबद्धज्ञानम्) अनिवार्यसम्बन्धज्ञानमविनाभावसम्बन्धज्ञानं नियतसम्बन्धज्ञानं तत्तत्स्थलेषु तत्तज्जातीयेषु तद्व्याप्तिज्ञानं तद्दर्शनं वानुमानं प्रमाणं भवति। तन्त्रान्तरप्रसिद्धं पूर्ववच्छेषवत्सामान्यतोदृष्टं च "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च" (न्याय० १।१।५) तथा "अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यस्तद्विषया सामा मन्यावधारणप्रधाना वृत्तिरनुमानम्" (योग० १।७ व्यासः) उदाहरणं च पर्वतो वह्निमान् धूमात्, यथा महानसं यत्र यत्र धूमस्तत्र तत्र वह्निस्तस्मात् पर्वतो वह्निमान् ॥ १०० ॥

आप्तोपदेशः शब्दः ॥१०१॥

(आप्तोपदेशः) आप्तस्य सर्वज्ञानमाप्तवतः सर्वज्ञस्येश्वरस्योपदेशः, यद्वाऽऽप्तो महर्षीणामन्तरात्मन्याविष्टः सर्गारम्भे यः स वेदः, तथाऽऽप्तस्य

साक्षात्कृतधर्मणो विद्यानिष्णातस्योपदेशः ( शब्दः ) शब्दप्रमाणम् ॥ १०१ ॥

उभयसिद्धिः प्रमाणात् तदुपदेशः ॥१०२॥

( उभयसिद्धिः प्रमाणात् ) उभययोः प्रकृतिपुरुषयोः सिद्धिर्भवति प्रमाणात् ( तदुपदेशः ) अतस्तस्य प्रमाणस्योपदेशः क्रियते । उभयसिद्धिः प्रमाणत्रयात् कथमिति विव्रियते-प्रकृतिपुरुषयोः प्रत्यक्षं प्रमाणं तु योगिनामबाह्यप्रत्यक्षत्वात् तेषां लीनवस्तुलब्धातिशयसम्बन्धाच्च भवतीत्युक्तं हि पूर्वम्, यतो हि प्रत्यक्षलक्षणके सूत्रे "यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्" इति न्यायशास्त्रवत् 'इन्द्रियार्थसन्निकर्षः' प्रत्यक्षस्य लक्षणं नोक्तमपितु 'यत्सम्बन्धसिद्धम्' उक्तं तच्चान्तःकरणसम्बन्धसिद्धमध्यात्मसम्बन्धसिद्धमपि योगिनां प्रत्यक्षं तत्प्रत्यक्षलक्षणेऽन्तर्भवति, तस्मात् प्रकृतिपुरुषयोः सिद्धौ प्रत्यक्षं प्रमाणमपिसाधकम् । अनुमानम्-महत्तत्त्वादिकं कार्यम्, कार्यं चोपादाननिमित्ताभ्यां सम्भवति घटवत्, यथा घटस्य मृत्तिकयोपादानकारणेन तथा कुम्भकारेण निमित्तकारणेन भवितव्यं तद्वदत्रापि प्रकृत्योपादानकारणेन पुरुषेणेश्वरेण निमित्तकारणेन भवितव्यमेव । अथ च "कारणगुणपूर्वकः कार्यगुणो दृष्टः" (वैशेषिक-२।१।२४ ) कार्यं त्रिगुणात्मकं सत्त्वरजस्तमोमयं तथाभूतेन त्रिगुणात्मकेन सत्त्वरजस्तमोमयेन प्रकृत्याख्येनोपादानकारणेनापि भवितव्यम् । "अचाक्षुषाणामनुमानेन बोधः" ( सांख्य १।६० ) इति सूत्रतः प्रकृतिपुरुषयोर्बोधायानुमानं प्रक्रियते पुनश्च "संहतपरार्थत्वात् पुरुषस्य" ( सांख्य १।६६) इति सूत्रेऽप्युपतिष्ठते, संहतपरार्थत्वात् पुरुषस्यानुमानेन बोधो भवति । महदादिकं संहतं तच्च परार्थं घटशय्यादिवत्, परश्च पुरुषः, एवमनुमानं प्रमाणसिद्धौ । शब्दप्रमाणं च "द्यावाभूमी जनयन् देव एकः ( यजु० १७।१९ ) इति पुरुषविशेष ईश्वरे शब्दप्रमाणम् । "त्यक्तेन भुञ्जीथा" ( यजु० ४०।१ ) भोक्तृपुरुषे शब्दप्रमाणम् । ईश्वरजीवयोः शब्दप्रमाणम् "बालादेकमणीयस्कमुतैकं नेव दृश्यते । ततः परिष्वजीयसी मम प्रिया देवता ॥ इयं कल्याण्यजरा मर्त्यस्यामृता गृहे । यस्मै कृताशये स यश्चकार जजार सः ॥" ( अथर्व १०।८।२५,२६) प्रकृतौ शब्दप्रमाणम्-"तुच्छ्येनाभ्वपिहितं यदासीत् तन्महिना जायतैकम्" ( ऋ० १०।१२९।३ ) 'आभु' प्रकृत्याख्यं कारणवस्तु यतः "इयं विसृष्टिर्यत आबभूव" ( ऋ० १०।१२९।७ ) इति निर्देशः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" ( श्वेता० ४।५ )

अजन्मा सत्त्वरजस्तमोमयी प्रकृतिः सङ्केतिता । "एकं बीजं बहुधा यः करोति" ( श्वेता० ६।१२ ) इति बीजशब्देनाभिलक्षिता प्रकृतिः । अथेश्वरजीवप्रकृतिरूपपदार्थत्रयस्य शब्दप्रमाणम् "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( ऋ० १।१६४।२० ) अत्र 'द्वा सुपर्णा' तथा 'अन्यः पिप्पलं स्वाद्वत्ति'–अनश्नन्नन्योऽभिचाकशीति' कथनेनेश्वरजीवौ सूच्येते 'समानं वृक्षम्' कथनेन प्रकृत्याख्यं प्रधानं लक्ष्यते । तस्मात् प्रत्यक्षानुमानशब्दाख्येन प्रमाणत्रयेण प्रकृतिपुरुषयोः सिद्धिर्भवतीति कथनं सूत्रे साधुतरां युक्तम् ॥१०२॥

पुनश्च--

सामान्यतो दृष्टादुभयसिद्धिः ॥१०३॥

( सामान्यतः-दृष्टात्-उभयसिद्धिः ) सामान्याद् दृष्टसम्बन्धात् "संहतपरार्थत्वात् पुरुषस्य" ( सां० १।६६ ) पूर्वोक्तात् खलूभयोर्भोक्तृत्वभोग्यत्वयोः सिद्धिर्भवति । महदादिकं भोग्यं संहतपरार्थत्वात् तच्च संहतं शय्यादिवत् परार्थं भोग्यं परश्च पुरुषो यदर्थं तत्संहतं भोग्यं तस्मान्महदादिकं भोग्यं पुरुषो भोक्ता । अन्ये भाष्यकारा इमं सूत्रं प्रकृतिपुरुषयोः सिद्धावनुमानप्रमाणस्यैकांशमुखेन व्याचक्षते तन्न युक्तम्, यदि स्यादेवं तर्हि त्वनुमानप्रमाणलक्षणानन्तरमेव शब्दप्रमाणलक्षणात्पूर्वमस्य सूत्रस्य रचनया भाव्यं तथा च "चिदवसानो भोगः" (१०४) इत्येतेनाग्रिमानन्तरसूत्रेण भोगविषयकेण सहास्य सङ्गतिरपि खल्वस्मदर्थविधाने भवति साऽपि किलास्मदर्थपोषिकाऽस्ति ॥१०३॥

स्याद् भोग्यं महदादिकं परन्तु पुरुषस्तु नित्यशुद्धबुद्धमुक्तस्वभावः सन् कथं हि स भोक्ता ? उच्यते । यतः--

चिदवसानो भोगः ॥१०४॥

( चिदवसानः–भोगः ) चिति चेतने पुरुषेऽवसानमवस्थानं यस्य स तथाभूतो भोगो भवति । भोग्यं जडं भवति तस्य भोगो भवति चेतनाय चेतने हि भोगोऽवतिष्ठते चेतनश्च पुरुषस्तस्मात्पुरुषो भोक्ता ॥१०४॥

चेतनः पुरुषो भोक्ता भवेद् यदि स कर्ता स्यात्, यः कर्ता स भोक्तेति प्रसिद्धेः परन्तु पुरुषस्तु नित्यशुद्धबुद्धमुक्तस्वभावः कथं नाम तस्य कर्तृत्वं पुनः कथं हि कर्तृत्वमन्तरेण तस्य भोगापत्तिरित्यत्रोच्यते सूत्रद्वयेन--

अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥१०५॥

अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः ॥१०६॥

सूत्रद्वयं सह व्याख्यायते--

( अकर्तुः-अपि फलोपभोगः ) अकर्तुरपि भवति फलोपभोक्तृत्वम् ( अन्नाद्यवत् ) यथाऽन्नाद्यकर्त्रा भोजनपाककर्त्राऽन्नाद्यं पक्वं कृतं भोजनमुपभोगोऽकर्तुः स्वामिनो भवति तद्वत्सम्भवेदेव तस्यापि नित्य-शुद्धबुद्धमुक्तस्वभावस्य पुरुषस्य भोग्यं स च तस्य भोक्ता, उक्तं योगभाष्ये व्यासेनापि "क्लेशकर्मादयः···मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते" (योग० १।२४ व्यासः) (वा) अथवा (अविवेकात् तत्सिद्धेः ) अविवेकात् कर्तृत्वसिद्धिः पुरुषस्य, विवेकात् पूर्वं तु स कर्ताऽस्त्येव तस्मात् ( कर्तुः फलावगमः ) कर्तुः पुरुषस्य फलप्राप्ति-र्भोगप्राप्तिर्भवति ॥१०५-१०६॥

पुनश्च--

नोभयं च तत्त्वाख्याने ॥१०७॥

( तत्त्वाख्याने ) विवेकात् सति तत्त्वसाक्षात्कारे यथार्थदर्शने ( उभयं च न ) उभयं कर्तृत्वं भोक्तृत्वं न भवतः, चकाराद् भोग्यं च नावतिष्ठते तत्सम्मुखम् ॥१०७॥

ऐन्द्रियिकप्रत्यक्षेण प्रकृतिपुरुषयोरुपलब्धिः कथं न भवतीति प्रदर्शयितुं सर्वविषयकैन्द्रियिकप्रत्यक्षे बाधकानि परिगण्यन्ते--

विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥१०८॥

( विषयः-अविषयः-अपि ) विषयो भावात्मकः पदार्थः खल्वविषयो-ऽनिन्द्रियविषयोऽपि भवति (अतिदूरादेः) अतिदूरत्वादेर्हेतोः। आदिनाऽ-तिसामीप्यात्, व्यवधानात्, मनसोऽनवस्थानात्, सौक्ष्म्यात्, अभि-भवाच्च ( इन्द्रियस्य हानोपादानाभ्याम् ) इन्द्रियस्य हानाद् विकाराद्-घातात् तथोपादानात्—उपरिष्टादादानमुपादानमन्येन्द्रियप्रभावस्तस्मा-च्चापि विषयोऽविषयो भवति,॥१०८॥

प्रस्तुतेष्वेतेषु बाधकेषु किं बाधकमत्र प्रकृतिपुरुषयोरुपलब्धावित्युच्यते-

सौक्ष्म्यात् तदनुपलब्धिः ॥१०९॥

( तदनुपलब्धिः सौक्ष्म्यात् ) तयोः प्रकृतिपुरुषयोरैन्द्रियिकप्रत्यक्षेण-

नुपलब्धिः सौक्ष्म्यात् तयोः सूक्ष्मत्वाद्धेतोर्भवति । योगिनामध्यात्म-प्रत्यक्षेण तु तयोरुपलब्धिर्भवत्येव तथा चोक्तं विज्ञानभिक्षुणाऽपि "योगजधर्मस्य चोत्तेजकतया प्रकृतिपुरुषादीनां प्रत्यक्षप्रमा भवति" ॥१०९॥

कथं कृत्वा प्रकृतिपुरुषयोरुपलब्धिः सौक्ष्म्यमनुसृत्य स्वीक्रियते तयोः सौक्ष्म्ये, किं प्रमाणम् । अत्रोच्यते--

कार्यदर्शनात् तदुपलब्धिः ॥११०॥

( कार्यदर्शनात् ) उपलभ्यमानं जगत् स्थूलं दृश्यते, तस्य कार्यभूतस्य स्थूलजगतो दर्शनादुपलम्भात् ( तदुपलब्धिः ) तयोः प्रकृतिपुरुषयोरुपलब्धिर्भवति, यतः स्थूलस्य पूर्वरूपं यद्वा स्थूलात् पूर्वसत्ताकं वस्तु भवति सूक्ष्मं तथा च स्थूलत्वविधायकं तद्धोक्तृ वा चेतनं वस्तु सूक्ष्ममेव, तस्मात् तयोः प्रकृतिपुरुषयोः सौक्ष्म्यं स्थूलजगतः कार्यरूपात् स्पष्टीभवति ॥११०॥

अत्र शङ्कते--

वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥१११॥

(वादिविप्रतिपत्तेः) कार्यदर्शनादित्युच्यते कथं हि कार्यदर्शनात् सूक्ष्मस्य कारणस्यानुमानं क्रियते कथं न शून्यस्यानुमानं क्रियेत "शून्यं तत्त्वं वस्तुधर्मत्वाद् विनाशस्य" यद्यत्कार्यं वस्तु तत्तद् विनाशधर्मि, अतः कार्यदर्शनात्कारणं शून्यमिति वादिविप्रतिपत्तिस्तस्मात् (तदसिद्धिः) तयोः प्रकृतिपुरुषयोरसिद्धिः (इति चेत्) इतिचेदुच्यते तर्हि– ॥१११॥

समाधत्ते--

तथाप्येकतरदृष्ट्याऽन्यतरसिद्धेर्नापलापः ॥११२॥

(तथा-अपि-एकतरदृष्ट्या) कार्यस्य वस्तुनो विनाशदृष्ट्या शून्यत्वसाधने (अन्यतरसिद्धेः-न-अपलापः) कार्यस्य वस्तुनः सूक्ष्मीभूतकारणसिद्धिर्भवतीति नापलापः, यथा हि कार्यस्य वस्तुनो विनाशो धर्मोऽस्तीत्येकतरदृष्टिस्तथा कार्यस्य वस्तुनः सूक्ष्मीभावप्राप्तिरपि धर्मोऽन्यतरदृष्टिः । वस्तुतस्तु वस्तुनां विनाशस्तस्य सूक्ष्मीभाव एव कणशो जायते न सर्वथा नाशः । अतः सूक्ष्मीभाव एव तस्य कारणस्वरूपम् ॥१११॥

अपरञ्च--

त्रिविधविरोधापत्तेश्च ॥११३॥

(त्रिविधविरोधापत्तेः-च) अथ च वादिपक्षे त्रिविधविरोधोऽप्यापद्यते

यतो न हि केवलं विनाश एव कार्यधर्मः किन्तु तस्योत्पत्तिस्थितिनाशास्त्रयो धर्माः सन्ति । त्रिविधधर्मविरोध आपद्यते यदि तस्य कारणं शून्यं स्वीक्रियेत कार्यस्य तु तथाभूतेन कारणेन भवितव्यं यतस्तस्योत्पत्तिस्थितिनाशास्त्रयो धर्मा नियम्येरन् तथाभूतं निमित्तकारणं तु पुरुषविशेष ईश्वरः, उक्तं हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म" (तै०उ० ३।१) "जन्माद्यस्य यतः" (वेदान्त० १।१।२) अथ च कार्ये सत्त्वरजस्तमांसि त्रयो धर्मा अवतिष्ठन्ते तदा तस्य तथाभूतेनोपादानकारणेन भाव्यं यस्मिन् सत्त्वरजस्तमांसि त्रयो धर्मा विद्येरन् । तथाभूतं च कारणमुपादानं प्रकृतिः, उक्तंहि पूर्वम् "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" (सांख्य १।६१) श्रुतौ च "अजामेकां लोहित-शुल्ककृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" (श्वेता० ४।५) प्रकृतिर्हि सत्त्वरजस्तमोमयी, शून्यं तु सर्वधर्मशून्यं तस्मादपि विरोध आपद्यते । तस्मात्कार्यभूतस्य जगतः सत्तात्मकेन कारणेन भवितव्यं न शून्येनासद्भूतेन ॥११३॥

यतश्च--

नासदुत्पादो नृश्रृङ्गवत् ॥११४॥

( असदुत्पादः-न नृशृङ्गवत् ) असत उत्पादो न भवति नृशृङ्गवत् किन्तु सत एवोत्पादः, सदेवोत्पद्यते-उद्भवति-अभिव्यज्यतेऽभिव्यक्तिमाप्नोति नासत्, तस्मात् सदात्मकतया स्वकारणेऽवतिष्ठते ॥११४॥

हेतुं प्रयच्छति--

उपादाननियमात् ॥११५॥

( उपादाननियमात् ) उपादाननियमान्नासदुत्पादः । यद्यदुत्पद्यते तत्तदुपादाननियमात्, यथाभूतं यस्योत्पद्यमानस्योपादानं तथाभूतं तदुत्पद्यते । मृत्तिकायां मृत्तिकातो वा घटः, तन्तुषु तन्तुभ्यो वा पटः, इत्युपादाननियमः ॥११५॥

यतः--

सर्वत्र सर्वदा सर्वासम्भवात् ॥११६॥

(सर्वत्र सर्वदा सर्वाम्भवात् ) सर्वत्र सर्वदा सर्वस्यानुत्पादात् । उपादानानियमे तु सर्वत्र सर्वदा सर्ववस्तूनामुत्पादो भवेत्, न च तथा भवति तस्मादुपादाननियमान्नासदुत्पादः ॥११६॥

पुनश्च--

शक्तस्य शक्यकरणात् ॥११७॥

(शक्तस्य शक्यकरणात्) शक्तस्य शक्यकरणं यच्छक्यं कर्तुं तच्छक्यं शक्तस्यान्तरे पूर्वतो विद्यमानं हि सम्भवति पूर्वतो विद्यमानं शक्यमव्यक्तं सद् वर्तते तदेवाभिव्यज्यते तस्मान्नासदुत्पादः ॥११७॥

नासदुत्पाद इत्यत्रापरो हेतुः--

कारणभावाच्च ॥११८॥

(कारणभावात्-च) अथ च कार्ये कारणभावात् कारणस्योपलम्भात्, उपलभ्यते हि कार्ये कारणम्, यथा घटे मृत्तिका पटे तन्तवः। एवं घटस्य मृत्तिकातः पटस्य तन्तुभ्योऽभेदो विद्यते हि। एवं कार्ये कारणभेदात् तथा च कारणे भावो यस्य तथाभूतात् कार्यात् कार्यस्य कारणे भावादव्यक्तरूपेण विद्यमानत्वादपि नासदुत्पादः। उक्तं हि वेदे "तुच्छ्येनाभ्वपिहितं यदासीत्तन्महिना जायतैकम्" (ऋ० १।१२६।२) "तद्धेदं तर्ह्यव्याकृतमासीत्" (बृह० १।४।७) "सदेव सोम्येदमग्र आसीत्" (छान्दो० ६।२।१) "नासतो विद्यते भावो०" (गीता २।१६)॥ ११८॥

अत्र शङ्कते--

भावे भावयोगश्चेन्न वाच्यम् ॥ ११९ ॥

( भावे भावयोगः-चेत् ) कारणात्मके भावे भावयोगः कार्यात्मकस्य भावस्य योगो विद्यमानत्वं चेत्। तदा ( न वाच्यम् ) कार्यस्योत्पादानुत्पादविषये न वक्तव्यं यद्वा कार्यमुत्पन्नं नोत्पन्नं न वक्तव्यं स्यात् ॥ ११९ ॥

समाधत्ते—

नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥

( न ) न युक्तमुक्तम्। यतः ( अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ) कार्यवस्तुनोऽभिव्यक्तिनिमित्तौ तस्योत्पादानुत्पादव्यवहारौ स्तः। गुप्तं सत् तिष्ठति कार्यं यदाऽभिव्यक्ततां प्राप्नोति प्रकटीभवति तदा तस्योत्पाद इत्युच्यते, यदा नाभिव्यक्ततामाप्नोति तदा तस्यानुत्पादः प्रोच्यते, तिलेषु तैलं सत् पीडनेनाभिव्यज्यते यथा। अभिव्यक्तिमाश्रित्य तस्य प्रयोगव्यवहाराव्यवहारौ च भवतः। तस्मान्न दोषः कारणे कार्यस्य गुप्तरूपेण विद्यमानत्वे ॥ १२० ॥

अथ च—

नाशः कारणलयः ॥१२१ ॥

( नाशः कारणलयः ) य एष नाशो विनाशः "शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद् विनाशस्य" वचनाद् वादिनाऽवलम्बितः शून्यसाधनाय न स सर्वथा नाशोऽभावो वाऽपितु कारणलयः-कार्यवस्तुनः कारणेऽन्तर्धानं कार्यस्य सूक्ष्मीभाव एव कारणभावः, अस्मात् पूर्वतः प्रकृतः शून्यवादो निरस्तो विज्ञेयः ॥ १२१ ॥

यद्येवं नाशो न सर्वथा नाशोऽभावः किन्त्वभिव्यक्तिं प्राप्तस्य व्यक्तस्य वा कार्यवस्तुनः कारणलयः सूक्ष्मीभावोऽव्यक्तभावः पुनश्च तथैवाव्यक्तरूपस्य सूक्ष्मस्य कश्चित् पूर्वः पदार्थः स्यादभिव्यक्तिहेतुस्तस्य चाभिव्यक्तिहेतुरन्यः पर इत्यनवस्थादोषः प्रसज्येत । अत्रोच्यते--

पारम्पर्यतोऽन्वेषणा *बीजाङ्कुरवत् ॥ १२२ ॥

(पारम्पर्यतः—अन्वेषणा बीजाङ्कुरवत् ) परमित्यवरादिदानीन्तनात्परं पुनः परात्परं परात्परमितीत्थं पारम्पर्यं तु प्रारम्भसर्गस्ततः पारम्पर्यतोऽन्वेषणा खलु बीजाङ्कुरवन्मन्तव्या। यथा बीजादङ्कुरोऽभिव्यज्यतेऽङ्कुराच्च पुनर्बीजाभिव्यक्तिरिति परम्परायामादिसर्गे वृक्षा यदा नासन् तदा तेषां बीजशक्त्या भाव्यमेव, यथा तदा बीजं पूर्वमथाङ्कुरः पश्चात् तथैव व्यक्तात् कार्यवस्तुनः पूर्वमव्यक्तभावः पुनश्च बीजेऽङ्कुरोऽव्यक्तरूपेणोपलभ्यते तद्वत्कार्यं वस्तु खल्वप्यव्यक्तरूपेण कारणपदार्थे विद्यते हीति मन्तव्यम् । अत्र सूत्रेऽनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चायौक्तिकमुक्तं यत् "कार्यस्याभिव्यक्तेरभिव्यक्तिरन्या" इति परम्पराऽनवस्थादोषोऽवतरितः परन्तु न तथा परम्पराऽनवस्थाऽऽशङ्काऽऽश्रिताऽत्र सूत्रे, किन्त्वत्र सूत्रे तु "नाशः कारणलयः" (सां० १।१२१ ) इति पूर्वसूत्रतः कारणपरम्परा ऽऽशङ्कापेद्यते यत् कार्याभिव्यक्तिः कारणाद् भवति पुनस्तत्कारणाभिव्यक्तिः कुत इति कारणपरम्पराऽऽशङ्कायां सूत्रतात्पर्यं तथैव बीजाङ्कुरवत् कारणपरम्परायामुदाहरणं दत्तम् ॥ १२२ ॥

हेत्वन्तरमुच्यते--

उत्पत्तिवद्वाऽदोष ॥१२३॥

( वा-उत्पत्तिवत्–अदोषः) अथवा स्यादुत्पत्तिवददोषः । यथा चोत्प-

*'ऽन्वेषणा' विज्ञानभिक्षुपाठः । 'ऽन्वेषणात्' पाठो ऽनिरुद्धस्य ।

त्तिवादे कार्यस्योत्पत्तिः कारणाज्जायते कारणात्कार्यमुत्पद्यते तत्रोत्पत्तिकारणस्य पूर्वता सिध्यति तथैवात्राभिव्यक्तिवादेऽपि कार्यस्याभिव्यक्तिः कारणाद् भवति यतस्तत्रानभिव्यक्तं सत् तद् वर्तते तदनभिव्यक्तस्वरूपवत् कारणं भवति। तस्मान्न दोषः ॥१२३॥

भवतु यदभिव्यक्तं तत्कार्यं यस्मादभिव्यज्यते तत्कारणं तथापि कार्यस्य विशिष्टं स्वरूपं किं यतस्तज्ज्ञानं सौगम्येन स्यादित्याकांक्षायामुच्यते—

हेतुमदनित्यं* सक्रियमनेकमाश्रितं लिङ्गम् ॥१२४॥

(लिङ्गम्) लिङ्ग्यतेऽनुमीयते कारणमनेनेति लिङ्गं कार्यम्। तच्च (हेतुमत्-अनित्यं सक्रियम्, अनेकम्, आश्रितम्) हेतुमत् कारणवत् सहेतुकं कारणान्वयि तथा निमित्तवच्च कस्मै चिन्निमित्ताय कृतं भोगार्थमिति यावत्, अनित्यं नश्वरं सक्रियं क्रियया निष्पद्यमानं निमित्तकारणेन चेतनेन तत्कारणे जडे प्रसार्यमाणया क्रियया निष्पद्यमानमथ च विकाररूपया क्रियया सततं युक्तम्, अनेकं कालभेदाद् देशभेदादाश्रयभेदादनेकमनेकसंख्यायुक्तं बहुरूपं वा, आश्रितं स्वकारणेऽवधृतम् ॥१२४॥

लिङ्गस्य कार्यस्य स्वरूपमुक्तमधुना यस्य कारणस्य कार्यं लिङ्गं तस्माल्लिङ्गात्तत्कारणं लिङ्ग्यतेऽनुमीयते—इति प्रदर्श्यते—

आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥

( आञ्जस्यात् तत्सिद्धिः ) अनायासेन व्यक्तत्वात् स्पष्टत्वात् प्रकटत्वात्, यत् खलु कार्यं वस्तु भवति तत्स्वत एव निजकारणं प्रदर्शयति, यतः कारणवस्तुनः क्रमविशेषे संस्थितिरेव कार्यम् यथा वस्त्रे तन्तवः कारणपदार्थास्तानवितानक्रमेणावस्थिता उपलभ्यन्ते तन्तुषु च कार्पासांशवःसंग्रथिता उपलभ्यन्ते, घटे मृदंशाश्च स्पष्टाः सन्ति हि। तथैव कार्यरूपाज्जगतोऽप्याञ्जस्यात् कारणभूतायाः प्रकृतेः सिद्धिर्भवति (वा गुणसामान्यादेः-अभेदतः ) यद्वा गुणसामान्यादेरभेदतः कार्यकारणसिद्धिर्भवति। यतः "कारणगुणपूर्वकः कार्यगुणो दृष्टः" ( वैशेषिक० २।१।२४ इति न्यायात्, कार्यस्य विशिष्टा अपि गुणा भवन्ति ते तु पूर्वसूत्रे प्रदर्शिताः कार्यस्वरूपप्रसङ्गे, परन्तु केचन गुणाः कार्ये कारणेन समाना भवन्ति तथाभूतेभ्यः समानगुणेभ्योऽपि कारणमनुमीयते यतः कार्यकारणयोस्तेषां समाना स्थितिः, तथाभूतगुणसामान्यात् कारणानुमानं

*इति सूत्रपाठोऽनिरुद्धवृत्तेः। अत्र 'अव्यापि' अधिकपाठो विज्ञानभिक्षुभाष्यस्य।

भवति यथा रक्ततन्तूनां वस्त्रं रक्तं जायते मिष्टस्य रसस्यापि पाको मिष्टो भवति। एवमत्रापि विज्ञेयम्, ते च समानगुणादयो महत्तत्त्वादिकार्यभूते जगति प्रकृतौ चातोऽग्रिमे सूत्रे प्रतिपाद्यन्ते हि "त्रिगुणाचेतनत्वादि द्वयोः" [ १२६ ] ( प्रधानव्यपदेशात्–वा ) वा चार्थे। अथ च प्रधानव्यपदेशादपि प्रकृतिसिद्धिः। प्रधानमिति प्रधीयते प्रध्रियते प्रारभ्यते व्यक्तिरूपं यस्मात् तत्प्रधानमिति नामव्यपदेशाच्छास्त्रेषु तस्मात् प्रकृतिसिद्धिः, तथा कार्यस्य वस्तुनो भवति प्रकृष्टं धानमाधानमाश्रयो यस्मिन् तत्प्रधानमिति गुणयोगात् प्रकृतिसिद्धिर्भवति ॥ १२५ ॥

पूर्वोक्तयोः प्रकृतिकार्ययोः—

त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६ ॥

( त्रिगुणाचेतनत्वादि ) त्रिगुणत्वं सत्त्वरजस्तमोमयत्वम्, अचेतनत्वं जडत्वम्, आदिशब्देन परार्थत्वं पुरुषार्थत्वं पुरुषप्रयोजनार्थत्वं परिणम्यमानत्वं च ( द्वयोः ) तयोः प्रकृतिकार्ययोः ॥ १२६ ॥

तत्र त्रिगुणत्वविषयेः—

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥१२७॥

लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् ॥१२८॥

अत्र विवेचनम्—

उभयत्र सूत्रयोः "वैधर्म्यम्" पदं दृष्ट्वा विज्ञानभिक्षुरुत्तरस्मिन् सूत्रे कथयति "अत्र वैधर्म्यं चेति पाठः प्रामादिक एव" स्वामी तुलसीरामस्तूभयत्र सूत्रयोः 'गुणानाम्' पदं दृष्ट्वा लिखति यदुत्तरस्मिन् सूत्रे "गुणानाम् पाठो व्यर्थः, उभययोः पाठयोः पुनरुक्तिदोषप्रसङ्गात्।" परन्तूत्तरसूत्रस्थस्य "लघ्वादिधर्मैः" इति भेदविषये न केनापि किञ्चिदुक्तम्। अहं तु कथयामि पूर्वस्मिन् सूत्रे "प्रीत्यप्रीतिविषादाद्यैः" परीक्षणीयं परन्तूत्तरस्मिन् सूत्रे "लघ्वादिधर्मैः" निरीक्षणीयं किमपि रहस्यमत्र विद्यते, तत्किमित्युच्यते—आभ्यां सूत्राभ्यां पूर्वं सूत्रमस्ति "त्रिगुणाचेतनत्वादि द्वयोः" अत्र द्वयोः पाठात् कारणं कार्यं च प्रस्तूयेते तस्मात् सूत्रादत्रोभयत्रसूत्रयोस्त्रिगुणत्वविषये विवेचना क्रियते यत् कारणकार्ययोः क्रमस्य प्रस्तुतत्वाद् गुणानां विषये विशिष्टवर्णनाय कारणकार्ययोः क्रमदृष्ट्या द्वे एते सूत्रे विज्ञेये। उभययोः सूत्रयोर्भिन्नभिन्नविषयप्रतिपादनाद् यद्वा पृथकपृथगधिकरणत्वान्नात्र पुनरुक्तिशङ्कोत्थापनीया। पूर्वस्मिन् सूत्रे

कारणगुणाः प्रदर्श्यन्ते प्रतीत्यादयोऽथोत्तरस्मिन् सूत्रे कार्यगुणा विवेच्यन्ते लघ्वादयः। अत्रोत्तरसूत्रे 'गुणानाम्' पाठस्य स्थाने 'गुणवताम्' पाठः स्यात्। कार्यैस्तु गुणवद्भिर्भवितव्यम्, प्रकृतिर्न गुणवती किन्तु गुणमयी, उक्तं हि "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" (सांख्य ६।३९)। 'गुणानाम्' पाठस्तु लिपिप्रमादतो भवेत्। तस्माददोषोऽस्त्युत्तरसूत्रे कार्यगुणविचारप्रसङ्गात्। अधुना सूत्रार्थ उपस्थाप्यते।

तत्र प्रथमं सूत्रं कारणगुणविषयकम्—

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥१२७॥

(गुणानां प्रीत्यप्रीतिविषादाद्यैः) सत्त्वरजस्तमसां गुणानां कारणरूपाणां गुणानां केवलगुणानां प्रीतिः प्रसन्नताऽप्रीतिरप्रसन्नता विषादो मोहः, आदिशब्देन लघुत्वचलत्वगुरुत्वानि लक्ष्यन्ते। मनुस्मृतौ यथा—

तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्।
प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत्॥
यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः।
तद्रजोऽप्रतिमं विद्यात्सततं हारि देहिनाम्॥
यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम्।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्॥
(मनु० १२।२७-२९)

एतैः प्रीत्यादिभिर्धर्मैः (अन्योऽन्यं वैधर्म्यम्) अन्योन्यं परस्परं वैधर्म्यं भिन्नत्वमस्ति कारणगुणेषु केवलगुणेषु साधर्म्यं नावतिष्ठते यतः सति साधर्म्ये न गुणाभिव्यक्तिः किन्तु प्रकृतिरेव "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" (सांख्य० १।६१) गुणानां वैधर्म्यमेव सृष्टिकारणम् "साम्यवैधर्म्याभ्यां कार्यद्वयम्" (सांख्य० ६।४२)। प्रकृतौ तु गुणा अनुद्भूताः, महत्तत्त्वे गुणा उद्भवन्ति सत्त्वमुखेन, अहङ्कारे स्फुरन्ति रजोमाध्यमेन, तमोभूमिकया पञ्चतन्मात्रेषु तथेन्द्रियशक्तिषु संगच्छन्ते संसृष्टा भवन्ति नैते गुणाः कारणगुणा भवन्ति ॥१२७॥

अथ कार्यगुणविषयकं सूत्रम्—

लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणवताम् (गुणानाम्?) ॥ १२८ ॥

(गुणवतां लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च) गुणवतां सत्त्वरजस्तमस्वतां भूतात्मकानामिन्द्रियात्मकानां कार्याणाम्। उक्तं हि तेषां गुण-

वत्त्वम् "प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" (योग० २।१८) तत्रस्थगुणानां वा लघुत्वचलत्वगुरुत्वधर्मैः साधर्म्यं वैधर्म्यं च भवति तत्र सत्त्ववतां परस्परं लघुत्वधर्मेण रजस्वतां परस्परं चलत्वधर्मेण तमस्वतां परस्परं गुरुत्वधर्मेण साधर्म्यं भवति, पुनः सत्त्ववतां रजस्वद्भिस्तमस्वद्भिश्च सह चलत्वगुरुत्वधर्माभ्यां तथा रजस्वतां सत्त्ववद्भिस्तमस्वद्भिश्च सह लघुत्वगुरुत्वधर्माभ्यामेवं तमस्वतां सत्त्ववद्भीरजस्वद्भिश्च सह लघुत्वचलत्वधर्माभ्यां वैधर्म्यं भवति। एकैकगुणस्य प्राधान्येन पदार्थास्तद्वन्तः प्रसिध्यन्ति। उक्तं हि व्यासेन "एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्ययाः सर्वे सर्वरूपा भवन्तीति गुणप्रधानभावकृतस्तेषां विशेष इति" (योग० २।१५ व्यासः) तथैव गीतायामपि "रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्त्वं तमश्चैके तमः सत्त्वं रजस्तथा" (गीता० २४।१० ) सुश्रुते खल्वपि "सत्त्वबहुलमाकाशं रजोबहुलो वायुः सत्त्वरजोबहुलोऽग्निः सत्त्वतमोबहुला आपस्तमोबहुला पृथिवी ॥" (सुश्रुत० शरीरस्थानम्। २।२०) अत्र सांख्येऽपि "ऊर्ध्वं सत्त्वविशाला। तमोविशाला मूलतः। मध्ये रजो विशाला" (सांख्य० ३।४८-५०) "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्येतिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥" (गी० १४।१८) अन्यच्च मनुस्मृतावपि "स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः। पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥" (मनु० १२।४२) तथा "आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः" (गीता० १७।७) त्रिविधः सत्त्वरजस्तमोधर्मवत्तया। अन्यच्च "आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥ यातयामं गतरसं पूति पर्युषितं च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्" (गीता० १७।८-१०) अथान्यो विचारः—पूर्वसूत्रे वर्णिताः "प्रीतिः, अप्रीतिः, विषादः" इत्येते त्रयो धर्मा उत्तरस्मिन् सूत्रे साधर्म्यप्रसङ्गे परित्यक्ताः, कुतः। यतो ह्येषां साधर्म्यप्रसङ्गो मनोविहाय कस्मिंश्चिद्गुणवति पदार्थे भूतात्मके यद्वेन्द्रियात्मके न सम्भवति मनस्येव प्रीतिरप्रीतिर्विषादश्च त्रयोऽपि धर्मा भवन्ति तत्र मनसि तेषां वैधर्म्याद् व्यवहारो जायते तेषां साधर्म्याभाव एव मनसि, तेषां साधर्म्ये तु मनोनिरोधो भवति मनसोऽन्यत्र वस्तुनि प्रीत्यप्रीतिविषादा नोद्भवन्ति तस्मादुत्तरसूत्रे प्रीत्यादीन् धर्मान्

विहाय लघुप्रभृतयो धर्मा एव साधर्म्ये स्थापिता वैधर्म्यं तु मनसि तेषां प्रवर्तनात् पूर्वसूत्रेऽन्तर्भूतमेव । अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च सूत्रमिदमन्यथार्थापितं विज्ञानभिक्षुभाष्ये तु सत्त्वादीनां गुणानां व्यक्तयः कल्पितास्तत्कल्पनमयुक्तं न सत्त्वादीनां व्यक्तयः स्वतन्त्रावस्थानकाः, आश्रयमाश्रित्यैवावतिष्ठन्ते यतः ॥ १२८ ॥

कारणकार्यप्रसङ्गतः कारणगुणानां कार्यगुणानां च साधर्म्यवैधर्म्ये—प्रदर्श्य पुनः कार्यकारणविषयो विशेषसम्बन्धज्ञापनायोपस्थाप्यते—

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥१२९॥

(महदादेः कार्यत्वम्) महत्तत्त्वादिकस्य भूतेन्द्रियपर्यन्तस्य वस्तुजातस्य कार्यत्वं विज्ञेयम् (उभयान्यत्वात्) उभयाभ्यां प्रकृतिपुरुषाभ्यामन्यत्वाद्भिन्नत्वात्, (घटादिवत्) यथा घटादयः पदार्थाः कार्यरूपा भोग्या नश्वराश्च सन्ति तद्वत्, पुरुषो भोक्ता पुरुषविशेषश्च परमात्मा कर्ता प्रकृतिश्च नित्या किन्तु तद्भिन्नानि महत्तत्त्वादीनि तस्मात् तानि कार्याणि सन्ति ॥१२९॥

हेत्वन्तराणि—

परिमाणात्, समन्वयात्, शक्तितश्चेति ॥१३०-१३२॥

(परिमाणात्) परिमीयते सङ्कुच्यते यत् तत्परिमाणं सङ्कोचधर्मि तस्मात् सङ्कोचधर्मित्वात्परिमितत्वात् परिमितियोगत्वात् (समन्वयात्) कारणानुसारेण स्वरूपवत्त्वात् (शक्तितः—च-इति) कारणे निमित्तकारणे या शक्तिः कार्योत्पादनशक्तिस्तया किलोत्पद्यमानत्वाच्च महत्तत्त्वादेः कार्यत्वं सिध्यति—इति कार्यहेतुतायाः कार्यप्रसङ्गस्य च समाप्तिः ॥१३०-१३२॥

महत्तत्त्वादेः कार्यत्वमन्तरेण—

तद्धाने प्रकृतिः पुरुषो वा ॥१३३॥

(तद्धाने) महत्तत्त्वादेः कार्यत्वविनाशे सति (प्रकृतिः पुरुषः—वा) प्रकृतिपुरुषाववतिष्ठेते । यद्वा (तद्धाने) महत्तत्त्वादेः कार्यत्वास्वीकारे (प्रकृतिः पुरुषः—वा) महत्तत्त्वादिकं प्रकृतिः पुरुषो वा स्यात् तस्य प्रकृतित्वं पुरुषत्वमापद्यते ॥१३२॥

पुनः—

तयोरन्यत्वे तुच्छत्वम् ॥१३४॥

(तयोः—अन्यत्वे तुच्छत्वम्) यदि महत्तत्त्वादिकं न विनश्येद् यद्वा न

कार्यं स्यात् किन्तु ताभ्यां प्रकृतिपुरुषाभ्यामन्यद् वस्तु भवेत्, तदा तथाभूतस्य वस्तुनस्तुच्छत्वमभावः प्रसज्येत यतो न हि प्रकृतिपुरुषाभ्यामन्यन्नित्यमनश्वरं वस्तु भवितुमर्हति ॥१३४॥

वस्तुतस्तु महत्तत्त्वादिकार्यं प्रकृतिश्च कारणं यतः—

कार्यात् कारणानुमानं तत्साहित्यात् ॥१३५॥

(कार्यात् कारणानुमानम्) कार्यात् कारणस्यानुमानं जायते। कथम (तत्साहित्यात्) कारणसाहित्यात् कार्यसत्ता भवति, कार्ये खलु कारणं सूक्ष्मं सत् पूरिपूर्णं तिष्ठति। घटे मृत्तिका पटे तन्तवस्तुन्तुषु कार्पासांशवो यथा। तस्मात् कारणसाहित्यात् कार्यं महत्तत्त्वादिकम् ॥१३५॥

तच्च कारणं प्रकृत्याख्यम्—

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥१३६॥

(त्रिगुणात्-लिङ्गात्-अव्यक्तम्) त्रिगुणवतो महत्तत्त्वादेरव्यक्तं सूक्ष्मं सत् तदन्तरे परिपूर्णमनुमातव्यम् ॥१३६॥

तस्मात्—

तत्कार्यतस्तत्सिद्धेर्नापलापः ॥१३७॥

(तत्कार्यतः) अव्यक्तकार्यतः प्रकृतिकार्यतो महत्त्वादेः (तत्सिद्धेः) अव्यक्तसिद्धेः प्रकृतिसिद्धेः (न–अपलापः) न ह्यपलपनमन्यथाकथनमस्ति ॥१३७॥

अथ पुरुषसिद्धौ—

सामान्येन विवादाभावाद् धर्मवन्न साधनम् ॥११८॥

(सामान्येन विवादाभावात्–धर्मवत्) अग्रिमसूत्रस्थं 'पुमान्' पदमत्र पुरस्तादुत्कृष्यते सप्तम्यां विपरिणम्य। पुंसि पुरुषे सामान्येन विवादाभावाद् धर्मवद्, यथा धर्मे सामान्येन विवादो न विद्यते सर्वे हि दार्शनिकास्तात्त्विका धर्मं मानवधर्मं मन्यन्ते यदाश्रितं मानवजीवनसाफल्यं भवति, तथैव पुमांसं पुरुषमपि मन्यन्ते, पुरुषमान्यतायां तु सर्वेषां दार्शनिकानामपि मान्यता समाना तथाविधे पुरुषे (साधनं न) साधनं नापेक्ष्यते। परन्तु विशेषमान्यतायां साधननपेक्ष्यते हि यतः केचन शरीरमेव पुरुषं मन्यन्ते केचिदन्तःकरणमित्यादिविशिष्टमान्यताऽस्ति ॥१३८॥

तत्र पुरुषविषयेऽभीष्टा मान्यता--

शरीरादिव्यतिरिक्तः पुमान् ॥१३९॥

(शरीरादिव्यतिरिक्तः पुमान्) शरीरादिभ्यः शरीरेन्द्रियान्तःकरणेभ्यो भूतात्मकेभ्यः प्रकृतिपर्यन्तेभ्यश्च भिन्नः पुरुषोऽस्ति। तत्र सामष्टिकः पुरुषविशेष ईश्वरः शरीराभ्यन्तरश्च जीवात्मा पुरुषोऽपि भिन्नः ॥१३९॥

तत्र हेतवः प्रदीयन्ते--

संहतपरार्थत्वात् ॥१४०॥

(संहतपरार्थत्वात्) शरीरादयः संहताः सन्ति, संहताश्च न स्वार्थाय भवन्ति तेषां जडत्वाच्छय्यादिवत् किन्तु परार्था एव, तस्माद् यदर्थाः सन्ति शरीरादयः स परस्तेभ्यः शरीरादिभ्यो भिन्न इति प्रथमो हेतुः ॥१४०॥

अथापरो हेतुः--

त्रिगुणादिविपर्ययात् ॥१४१॥

(त्रिगुणादिविपर्ययात्) सत्त्वरजस्तमांसि त्रयो गुणाः, आदिशब्देन जडत्वं पुरुषाधीनत्वं च गृह्यते, एतेषां विपर्ययात् तत्र पुरुषे निर्दिष्टधर्माणां विपरीतत्वमभावोऽथ भिन्नधर्माणां चेतनत्वादीनां भावो विद्यते, तस्मात् पुरुषः शरीरादिभ्यो भिन्नः ॥१४१॥

अधिष्ठानाच्चेति ॥१४२॥

(अधिष्ठानात्-च) पुरुषो हि शरीरादिकस्याधिष्ठानमधिष्ठाता तथाऽधिष्ठेयं शरीरादिकं तस्मादपि पुरुषः शरीरादिभ्यो भिन्नः (इति) इत्थं कथनमीश्वरजीवात्मनोर्द्वयोः समानधर्मत्वकथनसमाप्तिः। तत्रेश्वरस्याधिष्ठातृत्वं सृष्टिकर्तृत्वाज्जीवात्मनस्तु देहव्यवहारप्रवर्तयितृत्वादधिष्ठातृत्वमस्ति ॥१४३॥

तथा--

भोक्तृभावात् ॥१४३॥

(भोक्तृभावात्) भोक्तृभावो हि पुरुषे विद्यते भोग्यं हि शरीरादिकं तस्मात् स ततो भिन्नः। उक्तं हि पूर्वम् "चिदवसानो भोगः (सांख्य १।१०४) ॥१४३॥

कैवल्यार्थं प्रवृत्तेश्च ॥१४४॥

( कैवल्यार्थं प्रवृत्तेः-च ) पुरुषश्चात्मस्वरूपार्थं मोक्षार्थं प्रवर्ततेऽतः स शरीरादिभ्यो भिन्नः। यदि शरीरादिभ्यो भिन्नो न भवेत् कैवल्यार्थं कः प्रवर्तेत स एतादृशप्रवृत्तिमान् नित्यश्चेतनः पुरुष एव ॥१४४॥

कथं कैवल्यार्थं पुरुषस्य प्रवृत्तिरित्यत्रोच्यते--

जडप्रकाशायोगात् प्रकाशः ॥१४५॥

( जडप्रकाशायोगात् ) जडे स्वात्मप्रकाशस्य युक्तिः--सम्भवो नास्ति तस्मात् तस्य कैवल्यार्थप्रवृत्तेरनुपपन्नत्वात् ( प्रकाशः ) पुरुषो हि प्रकाशस्वरूपश्चेतनः स्वात्मप्रकाशनार्थं कैवल्यार्थं प्रवर्तते शरीरादिभ्यो भिन्नः सन् ॥१४५॥

एवं तु पुरुषश्चेतनावान् चेतनधर्मवान् प्रकाशधर्मवान् दीप्र इव धर्मी सिद्ध्येत्, धर्माद्गुणात्कथं विमोक्षः स्यात्। अत्रोच्यते--

निर्गुणत्वान्न चिद्धर्मा ॥१४६॥

(निर्गुणत्वात्-न चिद्धर्मा) पुरुषो निर्गुणत्वात् खलु चेतनधर्मा चेतनधर्मेण धर्मी नास्ति किन्तु केवलः प्रकाशात्मको ज्ञानस्वरूपोऽस्ति ॥१४६॥

निर्गुणत्वे हेतुः--

श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥१४७॥

( श्रुत्या सिद्धस्य न-अपलापः ) श्रुत्या खलु तस्य निर्गुणत्वसिद्धस्यापलापो न भवति "असङ्गो ह्ययं पुरुषः" (बृह० ४।३।१५) ( तत्प्रत्यक्षबाधात् ) तत्र निर्गुणत्वस्य प्रत्यक्षबाधदोषः प्रसज्यते। अतः स प्रकाशस्वरूपश्चेतन आत्मा शरीरादिभ्यो भिन्नः ॥१४७॥

तस्मादेव--

सुषुप्त्याद्यसाक्षित्वम् ॥१४८॥

( सुषुप्त्याद्यसाक्षित्वम् ) सुषुप्त्याद्यस्य स पुरुषः साक्षी सन् शरीरादिभ्यो भिन्नः स्यात्। अन्यथा गाढं मूढोऽहमस्वाप्सं सुखमहमस्वाप्समितिप्रतिभानं न स्यात्। तस्मात् पुरुषः शरीरादिभ्यो भिन्नश्चेतनः प्रकाशस्वरूपो ज्ञानस्वरूपः ॥१४८॥

शरीरादिभ्य. पुरुषस्य भिन्नत्वे निर्णीते सति पुनस्तस्य संख्याविषये विचार्यते, पूर्वं सिद्धान्तः स्थाप्यते--

जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥१४६॥

( जन्मादिव्यवस्थातः पुरुषबहुत्वम् ) जन्ममरणजीवनव्यवस्थातः- कश्चिज्जायते कश्चन म्रियते कश्चिच्च जीवतीति विविधा अवस्थाः पुरुषबहुत्वे हि सम्भवन्ति। शास्त्रेऽपि पुण्येन पुण्यं लोके जायते पापेन पापे। तथा चादिशब्देन मुक्तत्वबद्धत्वेऽपि गृह्येते ते अपि पुरुषबहुत्वे सति हि सम्भवतः ॥१४६॥

पूर्वपक्षत्वेनोच्यते--

उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥१५०॥

( उपाधिभेदे-अपि-एकस्य नानायोगः ) उपाधिभेदे-उपाधानभेदे-आश्रयभेदेऽपि स्यादेकस्य पुरुषस्य नानायोजना बहुत्वमितियावत् (आकाशस्य इव घटादिभिः ) यथा घटादिभिरुपाधिभिर्घटगर्तगृहैरुपाधानैराश्रयैराकाशस्य नानायोजना बहुत्वमुपचर्यते ॥१५०॥

समाधत्ते—

उपाधिर्भिद्यते न तु तद्वान् ॥ १५१ ॥

( उपाधिः-भिद्यते न तु तद्वान् ) भवतूपाधिभेदः, तेन किम्। उपाधिरेव भिद्यते न ह्युपाधिमान् भिद्यते, एवमुपाधिभेदे सत्यपि पुरुषस्य भेदेन न भवितव्यम्। तस्मान्नोपाधिभेदात् पुरुषबहुत्वं युक्तं किन्तु वास्तविकं पुरुषबहुत्वं यथोक्तं पूर्वम् ॥१५१॥

पुनश्चायमपि दोषः पुरुषैकत्वे प्रसज्यते--

एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः ॥१५२॥

( एवम्-एकत्वेन परिवर्तमानस्य ) एवं हि खल्वेकत्वेनैकरूपतया परितो वर्तमानस्य सर्वतो वर्तमानस्य सर्वत्र व्याप्तस्य पुरुषस्य ( विरुद्धधर्माध्यासः-न ) विरुद्धधर्माणां सुख्यहं दुःख्यहं तथा स जातः स मृतः, अहं रुग्णोऽहं स्वस्थ इत्यनुभवः सम्बन्धो वा न स्यात् ॥१५२॥

उपाधेर्विरुद्धधर्माश्चेत्--

अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् ॥१५३॥

( अन्यधर्मत्वे ) उपाधिधर्मत्वे ते विरुद्धधर्माः सुखित्वदुःखित्वस्वस्थत्वरुग्णत्वानि स्युरुपाधेरिति तदा (आरोपात्-अपि ) तेषामुपाधिधर्माणामारोपादपि ( न तत्सिद्धिः-एकत्वात् ) पुरुषे न विरुद्धधर्मत्वसिद्धिर्यत

आरोपयितुः पुरुषस्यैकत्वात् स एकः सन् तथाभूतान् विरुद्धधर्मान् स्वस्मिन् कथमारोपयेत्। संसारे खल्वेकस्मिन् काले केषांचिद् भवति जन्म केषाञ्चिच्च मरणं तथैवेकस्मिन् काले केचन सुखिनः केचन दुःखिनः केचित्स्वस्थाः केचिच्च रुग्णा दृश्यन्ते। तस्मात्पुरुषबहुत्वमेव युक्तम् ॥१५३॥

यदि पुरुषानेकत्वमस्ति तथा "असङ्गो ह्ययं पुरुषः" (बृह० ४।३।१५-१६) कथं पुरुष एकोऽत्र वर्णितः। एवं त्वद्वैतश्रुतिविरोध आपतति।

अत्र प्रतिविधीयते—

नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥१५४॥

(अद्वैतश्रुतिविरोधः-न) अद्वैतश्रतितो विरोधो न जायते, यतः (जातिपरत्वात्) तत्र श्रुतावेकत्ववर्णनं जातिपरमस्ति, जातिरेका भवति व्यक्तयस्त्वनेकाः। अन्यत्र श्रुतौ पुरुषबहुत्वं प्रतिपाद्यतेऽपि "ये तद्विदरमृतास्ते भवन्ति, अथेतरे दुःखमेवापियन्ति" (बृह० ४।४।१४) ॥१५४॥

ननु "असङ्गो ह्ययं पुरुषः" (बृह० ४।३।१५) इति वचने पुरुषशब्दश्चेज्जातिपरस्तर्हि, 'असङ्गः' विशेषणं तु बहुषु व्यक्तिषु तद्रूपेण न सङ्गच्छते यतो व्यक्तिभेदस्तु सङ्गेनैवोपपद्यते, असङ्गस्तु सङ्गवर्जितः केवल एक एव पुनः कथं व्यक्तिषु स्यादसङ्गत्वमित्याकांक्षायामुच्यते—

विदितबन्धकारणस्य दृष्ट्या तद्रूपम् + ॥१५५॥

(विदितबन्धकारणस्य दृष्ट्या) विदितं ज्ञातं बन्धकारणमविवेको येन तस्य प्राप्तविवेकस्य विवेकान्निवृत्तबन्धस्य पुरुषस्य दृष्ट्या (तद्रूपम्) खल्वसङ्गरूपमसङ्गत्वमुक्तम्। अतः पुरुषबहुत्वे न दोषप्रसक्तिः ॥१५५॥

विदितबन्धकारणस्यासङ्गत्वदृष्टिरुक्ताऽन्यस्य कथं न स्यात्तथारूपत्वानुभूतिस्तद्रूपस्य सर्वपुरुषधर्मत्वात्। अत्रोच्यते—

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥१५६॥

(अन्धादृष्ट्या-अनुपलम्भः) अन्धस्यादृष्ट्या भवत्यनुपलम्भो रूपादर्शनम् (चक्षुष्मतां न) नेत्रवतां न भवति। तस्माद् विवेकनेत्रवतां लब्धविवेकानां भवत्यसङ्गत्वानुभूतिर्न तद्रहितानाम्। अतः पुरुषबहुत्वं निरवद्यम्। पूर्वं चेदं च सूत्रं विज्ञानभिक्षुभाष्येऽन्यथा व्याख्यातम् ॥१५६॥

+ 'तद्रूपम्' अनिरुद्धस्य पाठः। विज्ञानभिक्षोस्तु 'अतद्रूपम्'।

अन्यच्च—

वामदेवादिर्मुक्तो नाद्वैतम् ॥१५७॥

( वामदेवादिः-मुक्तः ) वामदेवः शुको भरतश्च मुक्तः (अद्वैतं न) न ह्यद्वैतम् । मुक्तानामनेकत्वादपि पुरुषैकत्वं न ॥१५७॥

अथ चेन्न मन्येत कश्चिन्मुक्तस्तर्हि--

अनादावद्ययावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥

( अनादौ-अद्ययावत्-अभावात् ) अनादौ कालेऽथचाद्यपर्यन्तं यदि मुक्तेरभावो न कश्चिन्मुक्तस्तर्हि ( भविष्यत्-अपि-एवम् ) भविष्यत कालोऽपि तथैवानुमेयो मुक्तिरहितः पुनर्मोक्षोपदेशो निरर्थकः स्यात् ॥ १५८ ॥

ननु पुरुषबहुत्वस्वीकारेऽपि मुक्तबहुत्वात्स्यात्संसारस्योच्छेदः, आदिसर्गतोऽद्ययावत् क्रमेण सर्वेषां मुक्तत्वात् । अत्रोच्यते--

इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

( इदानीम्-इव-सर्वत्र-अत्यन्तोच्छेदः-न ) साम्प्रतिके काले सर्गे-इव सर्वत्र काले सर्वेषु सर्गेषु च संसारस्यात्यन्तोच्छेदो न भविष्यति कस्यापि पुरुषस्य परममोक्षो ब्रह्मणि लयो न भवति यदि हि स्यात् तर्हीदं जगन्न वर्तेत नोपलभ्येत , वर्ततेऽथोपलभ्यते जगत् तस्मान्न परममोक्षः पुरुषस्य । उक्तं विज्ञानभिक्षुभाष्येऽपीत्थमेव "सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति वर्तमानकालवदित्यनुमानं सम्भवेदित्यर्थः" ( विज्ञानभिक्षुभाष्यम् ) ॥ १५९ ॥

पुरुषस्यात्यन्तबन्धोच्छेदाभावे यद्वा परममोक्षाभावे हेतुरुच्यते-

व्यावृत्तोभयरूपः ॥ १६० ॥

( व्यावृत्तोभयरूपः ) यतः पुरुषः खलूभयरूपाभ्यां मुक्तत्वबद्धत्वाभ्यां व्यावृत्तः पृथग्भूतोऽस्ति, अविवेकाद् बद्धो भवति विवेकात् खलु मुक्तो भवति वक्ष्यति ह्यग्रे "नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते" ( सांख्य० ३ । ७१ ) अतस्तस्य न परममोक्षस्तस्मादेव सर्वेषां पुरुषाणां क्रमेण मुक्तत्वात् संसारोच्छेदो न भवति स एष सिद्धान्तः सांख्ये सूत्रद्वयवर्णितो दयानन्दर्षिणाऽभिमतोऽस्ति ॥ १६० ॥

अथ यः खलु पुरुषविशेष ईश्वरः "क्लेशकर्मविपाकाशयैरपरामृष्टः

पुरुषविशेष ईश्वरः" ( योग० १ । २४ ) यस्य विषयं श्रुतावुच्यते "जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" ( छान्दो० ६ । ३ । २ ) "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" (बृह० ३।७।२२) तथा यं परं पुरुषमेष शारीरः प्राप्य मुक्तो भवति "परात्परं पुरुषमुपैति दिव्यम्" ( मुण्ड० ३ । २ । ८ ) तस्य परमपुरुषस्य पुरुषविशेषस्येश्वरस्यानेन शारीरेण पुरुषेण सह तुलनया किं स्वरूपमिति प्रसङ्गतः सूत्रत्रयेण वर्ण्यते—

साक्षात् सम्बन्धात् साक्षित्वम् ।
नित्यमुक्तत्वम् ।
औदासीन्यं चेति ॥ १६१-१६३ ॥

इमानि त्रीणि सूत्राण्यकेत्रार्थाप्यन्ते—

( साक्षात् सम्बन्धात् साक्षित्वम् ) शारीरे पुरुषे जीवात्मनि साक्षात्सम्बन्धादन्तर्यामित्वसम्बन्धात् तस्य परमपुरुषस्य पुरुषविशेषस्येश्वरस्य साक्षित्वमन्तर्यामित्वमस्ति तत्कृतसर्वव्यापारस्य द्रष्टृत्वं ज्ञातृत्वं तस्मै भोगापवर्गौ प्रदातुं नियन्तृत्वमस्ति । उक्तं यथा श्रुतौ तस्य साक्षित्वम "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।।" ( ऋ० १ । १६४ । २० ) 'अभिचाकशीति' श्रुत्या तस्य साक्षित्वं स्पष्टं दर्शितम् । पुनश्च ( नित्यमुक्तत्वम् ) शारीरः पुरुषस्तु कदाचिद् बद्धो भवत्यविवेकात् कदाचिच्च मुक्तो भवति विवेकात् स न नित्यबद्धो न नित्यमुक्तः । विवेकाविवेकनिमित्ते तस्य मुक्तत्वबद्धत्वे पर्यावर्तेते परन्तु परमपुरुषस्य पुरुषविशेषस्येश्वरस्य नित्यमुकतत्वं सदामुक्तत्वमस्ति स तु सदैव मुक्तः । अथ च ( औदासीन्यं च-इति) तस्य शारीरस्य पुरुषस्य जीवात्मनोऽन्तरे स्थितस्य सतोऽपीश्वरस्य तत्कर्मफलभोगं प्रति सम्पर्कराहित्यमकामत्वमपि विद्यते । उक्तं तथैव श्रुतौ "अकामो धीरः" ( अथर्व० १० । ८ । ४४ ) " न लिप्यते लोकदुःखेन" (कठो० २।२।११) इतिशब्दः शारीरपुरुषेण सह तुलनासमाप्तिसूचकः ॥ १६१-१६३ ॥

अथेदानीं तथाभूतस्य परमपुरुषस्य पुरुषविशेषस्येश्वरस्य प्रकृत्याख्येन प्रधानेन सह सम्बन्धः प्रदर्श्यते—

उपरागात् कर्तृत्वं चित्सान्निध्यात् चित्सान्निध्यात् ॥१६४॥

( उपरागात् ) प्रकृतेरुपाश्रयात् तस्यास्तदधीने वर्तमानत्वात् पुरुष-

विशेषस्येश्वरस्य ( कर्तृत्वं ) सृष्टिकर्तृत्वं भवति। यथोक्तम् "एकं रूपं बहुधा यः करोति" ( श्वेता० ६। १२ ) तथा च ( चित्सान्निध्यात् ) चितश्चेतनस्य पुरुषविशेषस्येश्वरस्य सन्निधानसम्बन्धात् संसर्गात् समावेशसन्बन्धाद् भवति कर्तृत्वं प्रधानस्य प्रकृत्याख्यस्याव्यक्तस्येत्युत्तरसूत्रेणाग्रिमाध्यायस्थेन सहाभिसम्बध्यते ततः सूत्रात् 'प्रधानस्य' पदं पुरस्तादुत्कृष्यते। प्रकृतेः कर्तृत्वनपि श्रुतौ वर्ण्यते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" ( श्वेता० ४। ५ ) 'चित्सान्निध्यात्' इति द्विरुक्तिरध्यायसमाप्तिसूचिका ॥ १६४ ॥

समाप्तः सांख्यदर्शने प्रथमोऽध्यायः स्वामिब्रह्ममुनिभाष्योपेतः।



# द्वितीयोऽध्यायः

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥१॥

(प्रधानस्य) पूर्वाध्यायस्यान्तिमसूत्रात् कर्तृत्वमनुवर्तते। प्रधानस्य प्रकृत्याख्यस्याव्यक्तस्य कर्तृत्वं खलु (विमुक्तमोक्षार्थम्) विमुक्तशब्दोऽत्र विरक्तार्थः, यद्वा सूत्रपाठो विरक्त एव स्यादुत्तरसूत्रे विरक्तशब्दमादाय विचारप्रसङ्गात् तथा विरक्तव्यवहारप्रदर्शनात्--"विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् (सांख्य० ४। २३) विरक्तस्य मोक्षार्थं प्रधानस्य कर्तृत्वं यतः प्रधानाद् विरक्तस्य हि मोक्षो भवति, विवेकज्ञानेन प्रधानस्य दोषान् निरीक्ष्य प्रवर्तते मोक्षे (वा) समुच्चयार्थे, अथ च (स्वार्थम्) अविमुक्तमविरक्तं स्वीकर्तुं स्वम्प्रत्याकर्षितुं भोगायेति कर्तृत्वम्। प्रकृतेः परार्थत्वात् ततो मोक्षो भोगश्चोभौ पुरुषस्य सिध्यतः, तथा चात्रोच्यते "ततः प्रकृतेः-संहतपरार्थत्वात् पुरुषस्य" (सांख्य० १।६५, ६६) प्रकृतिः संहता त्रिगुणत्वात् सा च परार्था पुरुषार्था, पुरुषस्यार्थौ भोगापवर्गौ तयोर्भोगापवर्गयोः साधनाय हि प्रकृतिः, उक्तं च "प्रकाशक्रियास्थितिशीलं···भोगापवर्गार्थं दृश्यम्" (योग० २।१८) ॥१॥

पूर्वपक्षत्वेनोच्यते--

विरक्तस्य तत्सिद्धेः ॥२॥

(विरक्तस्य तत्सिद्धेः) विरक्तस्य मोक्षसिद्धेः, यो हि विरक्तस्तस्य मोक्षस्तु स्वतः सेत्स्यति कथमुच्यते विरक्तस्य मोक्षार्थं प्रधानस्य कर्तृत्वम्। भवतु खल्वविरक्तस्य भोगार्थं प्रधानस्य कर्तृत्वं न तु विरक्तस्य मोक्षार्थम् ॥२॥

समाधत्ते--

न श्रवणमात्रात् तत्सिद्धिरनादिवासनाया बलवत्त्वात् ॥३॥

(श्रवणमात्रात् तत्सिद्धिः-न) प्रकृतेर्दोषश्रवणमात्रादेव मोक्षसिद्धिर्विरक्तत्वसिद्धिर्न भवति। यतः (अनादिवासनायाः-बलवत्त्वात्) भोगविषयिकाया अनादिवासनायाः प्रबलत्वात्। यावता तद्भोगदोषाः साक्षादनुभूता न स्युर्यद्वा मनननिदिध्यासने न भवेतां तावदनादिवासनानिवृत्ति

र्न भवति, तन्निवृत्तिमन्तरेण कुतो विरक्तत्वं मोक्षो वा सम्भवेत्, तदेतत्कृत्यं विवेकतः प्रधानमवगाह्य हि भवितुमर्हति तस्माद् विरक्तस्य मोक्षार्थमपि प्रधानस्य कर्तृत्वम् ॥३॥

तथा च प्रकृतेरेतत्कृत्यम्—

बहुभृत्यवद्वा प्रत्येकम् ॥४॥

( बहुभृत्यवत्–वा प्रत्येकम् ) वाकारः समुच्चयार्थः । बहुभृत्यवच्च प्रधानस्य कर्तृत्वं प्रत्येकं विरक्तमविरक्तमभिसम्बध्नाति । यथा कश्चिद् बहुभृत्यवान् स्वामी भवति स सेवायां प्रवृत्तान् कांश्चिद् वेतनेन बिभर्ति कांश्चिच्च समाप्तसेवाकालान् कृतार्थान् सेवाकार्याद् विरक्तानपि पुरस्कारेण सत्करोति, सेवाकार्याद् विरक्ताविरक्तौ प्रति तस्य पुरस्कारवेतनप्रदानाभ्यां सत्करणभरणकर्तृत्वं भवति तथैव विरक्ताविरक्तौ प्रति प्रधानस्य मोक्षभोगप्रदानाभ्यां कर्तृत्वमस्ति । तस्माद् विरक्तस्य मोक्षार्थमपि प्रधानस्य कर्तृत्वं नायुक्तम् ॥४॥

अत्र पूर्वपक्षत्वेनोच्यते—

प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥५॥

( प्रकृतिवास्तवे च ) विरक्तस्य मोक्षार्थमविरक्तस्य भोगार्थं कर्तृत्वं प्रकृतेश्चेदेवं तु प्रकृतेः कर्तृत्वं वास्तविकं स्यात् पुनः प्रकृतेर्वास्तविके कर्तृत्वे सति तु ( पुरुषस्य–अध्याससिद्धिः ) प्रकृतस्य पुरुषविशेषस्येश्वरस्य कर्तृत्वाध्याससिद्धिः स्यात् तस्य कर्तृत्वमारोपमात्रमेव भवेत् ॥५॥

समाधत्ते—

कार्यतस्तत्सिद्धिः × ॥६॥

( कार्यतः–तत्सिद्धिः ) कार्यनिर्माणतो यत्प्रकृतिं जगद्रूपे कार्ये परिणमयतीति तस्मात् तस्य पुरुषस्य कर्तृत्वसिद्धिः । अतो नाध्यासमात्रं पुरुषस्य कर्तृत्वम् । उक्तं ह्यत्र "स हि सर्ववित् सर्वकर्ता" ( सांख्य० ३।५६ ) ॥६॥

प्रकृतेः कर्तृत्वे तु—

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥७॥

(चेतनोद्देशात्–नियमः) विरक्तस्य मोक्षार्थेऽविरक्तस्य भोगार्थे प्रकृतेः

× 'तत्सिद्धिः' पाठोऽनिरुद्धस्य । 'तत्सिद्धेः' विज्ञानभिक्षोः ।

कर्तृत्वे चेतनोद्देशात् पुरुषविशेषस्येश्वरस्य प्रेरणात् खलु नियमोऽस्ति तत्रापि प्रकृतेर्न स्वतन्त्रं कर्तृत्वमस्ति तस्या जडत्वात् पारवश्याच्च परवशा प्रकृतिरत्र सांख्ये स्वीकृता हि "अकार्यत्वेऽपि तद्योगः पारवश्यात्" (सांख्य० ३।५५) यस्य वशे प्रकृतिः सोऽपि तत्रोक्तः "स हि सर्ववित् सर्वकर्त्ता" ( सांख्य० ३।५६) ( कण्टकमोक्षवत् ) यथा कण्टकाद्--दण्ड-शूलात् कश्चिन्मोच्यते कश्चिन्नेति राजप्रेरणं तत्र नियमः ।।७।

अन्यच्च--

अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ।।८।।

(अन्ययोगे-अपि तत्सिद्धिः) चेतनात् पुरुषादन्यत्प्रधानं प्रकृत्याख्यमव्यक्तम् । पूर्वोक्ते प्रधानस्य कर्तृत्वयोगेऽपि तत्सिद्धिस्तस्य पुरुषस्य कर्तृत्वसिद्धिर्भवति । ( न-आञ्जस्येन ) यतो नान्यस्याव्यक्तस्याञ्जस्येन स्वतः कर्तृत्वं पुरुषमन्तरेण सिध्यति (अयोदाहवत् ) यथाऽयसो लोहस्य दाहो न स्वतः किन्तु दाहस्वरूपस्य प्रकाशस्वरूपस्याग्नेः संसर्गाद्भवति तथैवात्रापि पुरुषविशेषसंसर्गाद् विरक्तमोक्षार्थमविरक्तभोगार्थं कर्तृत्वं प्रधानस्य भवति । उक्तं हि पूर्वम् "कर्तृत्वं चित्सान्निध्यात् प्रधानस्य" (सांख्य० १।१६४, २।१) ।।८।

यद्विषये पुरुषविशेस्येश्वरस्य प्रधानस्य च कर्तृत्वमुक्तं सा पुनः सृष्टिः कीदृशीत्युच्यते—

रागविरागयोर्योगः सृष्टिः ।।९।।

( रागविरागयोः-योगः ) रागस्य प्रतिपक्षी विरागस्तस्मादत्र स विरागो द्वेषार्थः । रागद्वेषयोर्योगः-रागद्वेषयोः प्रवर्तनम् । एकस्मिन् रागस्तदान्यस्माद् द्वेषः, एकस्माद् द्वेषस्तदाऽपरस्मिन् रागः । इत्थं रागद्वेषभूमिः (सृष्टिः) सृष्टिरस्तीति पुरुषभावनामपेक्ष्य सृष्टिलक्षणम् ।।९।।

सा च सृष्टिः--

महदादिक्रमेण पञ्चभूतानाम् ।।१०।।

(महदादिक्रमेण) प्रकृतितो महान् महत्तत्त्वं पुनश्च ततोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणि तथा चोभयमिन्द्रियम् । इत्थं क्रमेण पश्चात् ( पञ्चभूतानाम् ) तन्मात्रेभ्यः पञ्चस्थूलभूतानां पञ्चस्थूलभूतपर्यन्तानां सृष्टिर्भवति ।।१०।।

तत्र च--

आत्मार्थत्वात् सृष्टे नैंषामात्मार्थ आरम्भः ॥११॥

(आत्मार्थत्वात् सृष्टेः) महदादिक्रमोऽनुवर्तते । महदादिक्रमेण पञ्च-भूतेभ्यः पूर्वा या सृष्टिरुभयेन्द्रियपर्यन्ता तस्याः सृष्टेरात्मार्थत्वमात्मोपकरणसम्पादनार्थत्वं बुद्ध्यहङ्कारमनोज्ञानेन्द्रियकर्मेन्द्रियसाधनार्थत्वमस्ति । वक्ष्यति ह्यग्रेऽपि "पुरुषार्थं करणोद्भवः…"(सांख्य० २।३६) तथा "पुरुषार्थं संसृतिर्लिङ्गानां…" (सांख्य० ३।१६) तस्मात् तदग्रे ( एषाम्-आरम्भः-आत्मार्थः-न) एषां पूर्वसूत्रे साक्षात्पठितानां पञ्चभूतानां विशेषणम् । एषां पञ्चस्थूलभूतानां पृथिव्यादीनां व्यक्तिसमारम्भ आत्मार्थ आत्मोपकरणसम्पादनार्थो न, आत्मोपकरणानि न भौतिकानि वक्ष्यति ह्यग्रे । किन्तु भौतिकवस्तुसम्पादनार्थः । एवं सृष्टेर्विभागद्वयं प्रदर्शितं तत्रैको भागस्तु खल्विन्द्रियात्मको द्वितीयश्च भौतिकः । तथैव योगदर्शनेऽपि प्रतिपादितं विभागद्वयम् "…भूतेन्द्रियात्मकं दृश्यम्"(योग० २।१८)अस्य सूत्रस्यानिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चायुक्तोऽर्थःकृतः । तत्र 'महदादीनां सृष्टिः पुरुषमोक्षार्था, न स्वमोक्षार्था प्रकृतेरेव सृष्टिः स्वमोक्षार्था महदादयस्तु प्रकृतौ लीयन्ते तेषामनित्यत्वात् तत्र न स्वार्थमोक्षप्रयोजनं घटते; इति तयोराशयः ।प्रकृतेरेव सृष्टिः स्वमोक्षार्था न महदादीनां स्वमोक्षार्था, यदुच्यते किं महदादीनां या सृष्टिः सा प्रकृतेः सृष्टिर्न ? किञ्च महदादिभ्यो भिन्नाऽपि काचित्प्रकृतेः सृष्टिरस्ति यदर्थमुच्यते प्रकृतेः सृष्टिः स्वमोक्षार्था । सर्वा हि सृष्टिः प्रकृतेः सृष्टिः, इत्थमनर्गलकथनेन किम् । सांख्यसिद्धान्तविरुद्धं च कथनमिदम् ॥११॥

✓ दिक्कालावाकाशादिभ्यः ॥१२॥

(दिक्कालौ-आकाशादिभ्यः) यौ दिक्कलौ व्यवह्रियेते तौ खल्वाकाशादिभ्य एव निर्धारणीयौ यतो हि तावेतावपेक्ष्यैव व्यवह्रियेते, पृथिवीमपेक्ष्याकाशविशेषो दिग्भवति तथा वाय्वादीनां स्वरूपोपादानहानव्यवहारावधिः कालः । तस्मादत्र पृथङ् न सूत्रयितव्यौ किन्त्वाकाशाद्यन्तर्भूतावेव ॥१२॥

अथ या सृष्टिर्महदादिक्रमेणात्मार्थे पुरुषोपकरणार्थे दशमैकादशयोः सूत्रयोः सूचिता सा विव्रियते—

अध्यवसायो बुद्धिः ॥१३॥

(अध्यवसायः—बुद्धिः) पुरुषशरीरेऽध्यवसायो निश्चयो यतो भवति तद्धर्मकमुकपरणं बुद्धिरुच्यते सामष्टिकं महत्तत्त्वम्, अध्यवसायस्तु सत्त्वस्वरूपवत्त्वात् ॥१३॥

तत्कार्यं धर्मादिः ॥१४॥

(तत्कार्यं धर्मादिः) तस्या बुद्धेरन्तःकरणस्य कार्यं धर्मो ज्ञानं वैराग्यमैश्वर्यप्रवृत्तिश्च रजोयोगात् ॥१४॥

महदुपरागाद् विपरीतम् ॥१५॥

( महत्—उपरागात् विपरीतम् ) महत्तत्त्वं शरीरे बुद्धिरूपं तत्खलूपरागात् तमसा सह वर्तमानं विपरीतमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति ॥१५॥

अथाहङ्कारः—

अभिमानोऽहङ्कारः ॥१६॥

(अभिमानः—अहङ्कारः) पुरुषशरीरेऽभिमानो भवति यतः सोऽहङ्कारः ॥१६॥

एकादश पञ्चतन्मात्रं तत्कार्यम् ॥१७॥

(एकादश पञ्चतन्मात्रम ) समनस्कानि ज्ञानकर्मेन्द्रियाणि पञ्चतन्मात्राणि (तत्कार्यम् ) अहङ्कारस्य कार्यम् ॥१७॥

सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥१८॥

( वैकृतात्–अहङ्कारात् ) संशुद्धात् सत्त्वभूमिवतोऽहङ्कारात् (सात्त्विकम्–एकादशकं प्रवर्तते ) इन्द्रियाणामेकादशसंख्याकं मनः सात्त्विकं सत्त्वभूमिमदभिव्यक्तं भवति। यथोक्तमग्रेऽपि "गुणपरिणामभेदान्नानात्वमवस्थावत्" (सांख्य० २।२७) राजसादहङ्काराद् राजसं तामसात् तामसमित्यपि योजनीयम्। एवं मनसस्त्रिगुणत्वेन प्रवर्तनं भवति ॥१७॥

किं तदेकादशकमित्युच्यते—

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥१९॥

( कर्मेन्द्रियबुद्धीन्द्रियैः–आन्तरम् ) कर्मेन्द्रियैर्ज्ञानेन्द्रियैर्दशभिः सह

यदान्तरमान्तरिकमिन्द्रियं मनस्तत् (एकादशकम्) एकादशसंख्याकम्। यथा मनावपि "एकाशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्" (मनु० २।९२) ॥१९॥

तानि खल्विन्द्रियाणि—

आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥२०॥

( भौतिकानि न ) भूतोपादानकानि न सन्ति ) आहङ्कारिकत्वश्रुतेः ) तेषामहङ्कारकार्यत्वश्रवणात्। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" (मुण्ड० २।१।३) ॥२०॥

इन्द्रियाणि न भौतिकानीत्युच्यते, पुनः "पुरुषस्य मृतस्याग्नि वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम" ( बृह० ३।२।१३ ) कथं तेषां लयो भूतेषु प्रतिपाद्यते । अत्रोच्यते—

देवतालयश्रुतिर्नारम्भकस्य ॥२१॥

( देवतालयश्रुतिः-आरम्भकस्य न ) अग्न्यादिदेवतासु खल्विन्द्रियाणां लयप्रदर्शिका श्रुतिरेषा न ह्यारम्भकत्वस्य। नोत्पादकत्वं भूतानामत्र लक्ष्यते, स्पष्टंह्यत्र चन्द्रदिङ्नामतो देवतात्वमेषां लयस्थानानां नहि चन्द्रो दिग्वा पञ्चभूतेषु स्तः ॥२१॥

यदीन्द्रियाणि न भौतिकानि भूतेभ्यो नोत्पन्नानि तदा तानि नित्यानि मन्येरन् कुतो ह्यनित्यानि तानीत्याकांक्षायामुच्यते—

तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च × ॥२२॥

(तदुत्पत्तिश्रुतेः) तेषामिन्द्रियाणामुत्पत्तिविषयिकायाः श्रुतेः। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मुण्ड० २।१।३ ) (च) अथ च ( विनाशदर्शनात् ) तेषामिन्द्रियाणां विनाशोऽपि दृश्यते तस्मादिन्द्रियाणि सन्त्यनित्यानि ॥२२॥

अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने ॥२३॥

( इन्द्रियम्-अतीन्द्रियम् ) चक्षुरादीन्द्रियं खल्वतीन्द्रियं तद्भिन्नेन केनचिदपीन्द्रियेण नोपलभ्यम् ( अधिष्ठाने भ्रान्तानाम् ) गोलके गोलकात्मना खल्विन्द्रियमन्तव्यं भ्रान्तानां न तु वस्तुतः ॥२३॥

यदि गोलकं नेन्द्रियं तद्भिन्नमतीन्द्रियं तर्हि त्वकेमेवेन्द्रियं स्याद् भिन्नभिन्नबाह्याकाराभावात्। अत्रोच्यते —

× 'तदुत्पत्तिश्रुतेः' विज्ञानभिक्षुपाठः, 'तदुत्पत्तिः श्रूयते' अनिरुद्धस्य ।

शक्तिभेदेऽपि भेदसिद्धौ नैकम् ।।२४।।

( अपि शक्तिभेदे-भेदसिद्धौ-एकं न ) अपितु शक्तिभेदे सति-गन्धग्रहणशक्तिः, रसग्रहणशक्तिः, रूपग्रहणशक्तिः, स्पर्शग्रहणशक्तिः, शब्दग्रहणशक्तिः, सङ्कल्पधारणशक्तिरित्येवं शक्तिभेदे सति तेषामिन्द्रियाणां भेदसिद्धौ सत्यामिन्द्रियमेकं नास्ति ।।२४।।

पुनश्च--

न कल्पनाविरोधः प्रमाणदृष्टस्य ।।२५।।

( प्रमाणदृष्टस्य कल्पनाविरोधः- न ) स्वस्वविषयग्रहणात्मकेन प्रत्यक्षेण प्रमाणेन दृष्टस्य भेदस्येन्द्रियानेकत्वस्य कल्पनया कृतो विरोधो न युक्तः । तस्मान्नैकमिन्द्रियं किन्तु यथोक्तान्येकादश सन्ति ।।२५।।

तेषु--

उभयात्मकञ्च मनः ।। २७ ।।

( उभयात्मकं च मनः ) मनस्तूभयात्मकं कर्मेन्द्रियज्ञानेन्द्रियानुगतमुभयत्रप्रवृत्तिमदुभयप्रवृत्तिनिमित्तं स्वगुणेन वर्तमानं च । उक्तं यथा "एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्" ( मनु० २ । ९२ ) २६ ।।

तस्य स्वगुणेन वर्तमानत्वं विव्रियते--

गुणपरिणामभेदान्नानात्वमवस्थावत् ।। २७ ।।

( गुणपरिणामभेदात्-नानात्वम्-अवस्थावत् ) सत्त्वरजस्तमसां गुणानां परिणामभेदात् खलु मनसो नानात्वं भवति-सात्त्विकं मनः, राजसं मनः, तामसं मनः । उक्तं च पूर्वमपि "सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्" ( सांख्य० २ । १८ ) तच्च मनसो नानात्वं भवति यथा देहस्य बाल्ययौवनजरारूपमवस्थात्रयम् । विज्ञानभिक्षुभाष्ये सूत्रमिदमन्यथार्थापितं मनोविषयकाष्टादशतमात् सूत्राद् विरुद्धं च, यतस्तत्र मनसि गुणत्रयस्य स्वीकारः कृतस्तेनापि, तेषामेव गुणानां परिणामादत्रापि मनसस्त्रैविध्यमनुसन्धेयम् । मनःसृष्टिप्रकरणादेवात्र तत्कथनम् ।। २७ ।।

मनसो धर्मवर्णनानन्तरमिन्द्रियाणां धर्माः प्रदर्श्यन्ते--

रूपादिरसमलान्त उभयोः ।। २८ ।

( उभयोः-रूपादिरसमलान्तः ) ज्ञानेन्द्रियकर्मेन्द्रिययोः खलु रूपमादौ

रसमलोऽन्ते यस्य स रूपादिरसमलान्तो गुणगणः। रूपरसगन्धस्पर्शशब्दाश्चक्षुरादीनां ज्ञानेन्द्रियाणां भाषणादानगमनानन्दपुरीषाणि कर्मेन्द्रियाणाम्। रसमलोऽत्र भोजनरसस्य मलः पुरीषमित्यर्थः ॥ २८ ॥

यस्य खल्विन्द्रियाणि तं प्रति तेषां तथा तानि प्रति च तस्य रूपादिग्रहणे परस्परसम्बन्धः प्रदर्श्यते --

द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥२९॥

( आत्मनः—द्रष्टृत्वादिः ) रूपादिविषयग्रहणे किलेन्द्रियाणि प्रति द्रष्टृत्वादिः सम्बन्ध आत्मनोऽस्ति ( इन्द्रियाणां करणत्वम् ) आत्मानं प्रति रूपादिग्रहणे करणत्वमिन्द्रियाणां सम्बन्धोऽस्ति । तत्र रूपग्रहणे द्रष्टाऽऽत्मा दर्शनकरणं चक्षुः, रसग्रहणे रसयिताऽऽत्मा रसनकरणं जिह्वा, गन्धग्रहणे घ्राताऽऽत्मा घ्राणकरणं नासिका, स्पर्शग्रहणे स्प्रष्टाऽऽत्मा स्पर्शकरणं त्वक्, शब्दग्रहणे श्रोताऽऽत्मा शब्दकरणं श्रोत्रम्। भाषणे, वक्ताऽऽत्माभाषणकरणं वाक्, आदाने आदाताऽऽत्माऽऽदानकरणं हस्तः, गमने गन्ताऽऽत्मा गमनकरणं पाद इत्यादि योजनीयम् ॥ २० ॥

अपरञ्च करणप्रकरणे--

त्रयाणां स्वालक्षण्यम् ॥३०॥

( त्रयाणां स्वालक्षण्यम् ) करणत्वमनुवर्तते । त्रयाणां पूर्वोक्तानां बुद्ध्यहङ्कारमनसां स्वालक्षण्यं स्वालक्षणिकं करणत्वं स्वस्वलक्षणेन निर्वृत्तं करणत्वं विज्ञेयम्। निर्वृत्तार्थस्ताद्धितः ष्यञ् प्रत्यय आर्षः। यद्वा स्वालक्षण्यं स्वस्वलक्षणं करणत्वेनास्ति, ष्यञ् स्वार्थे। तेषां बुद्ध्यहङ्कारमनसां स्वस्वलक्षणम्–अध्यवसायोऽहङ्कृतिः सङ्कल्पः करणत्वेन पृथक्-पृथगस्ति। अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च सूत्रमिदमन्यथाव्याख्यातं तत्रोभयत्र वैधर्म्यप्रदर्शनपरं सूत्रं योजितं न हि वैधर्म्यस्य प्रकरणं किन्तु प्रकरणं तु करणत्वस्य तथैवार्थेन भवितव्यम् ॥३०॥

अथ च--

सामान्या [न्यकर?] करणवृत्तिः प्राणाख्याः
[प्राणाद्याः?] वायवः पञ्च ॥३१॥

( सामान्या करणवृत्तिः ) करणानामुपर्युक्तसूत्रद्वये कथितानां ज्ञाने-

न्द्रियकर्मेन्द्रियबुद्ध्यहङ्कारमनसां त्रयोदशानां* करणानां वृत्तिः सामान्या करणत्वव्यापारनिमित्तं सामान्यम् ( प्राणाख्याः पञ्च वायवः ) ये खलु प्राणनामकाः प्राणापानव्यानसमानोदानाः पञ्च वायवः शरीरे वर्तमानाः सन्ति तैर्वायुभूतैः पञ्चभिः प्राणैस्तेषां सर्वेषां ज्ञानेन्द्रियकर्मेन्द्रियबुद्ध्यहङ्कारमनसां करणानां वृत्तिः प्रभवति, उक्तं हि प्रश्नोपनिषदः प्राणेन्द्रियमनसामहंश्रेयसि विवादप्रकरणे प्राणाधारकत्वं करणानाम्। "या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि। या च मनसि※ संतता शिवां तां कुरु मोत्क्रमीः" ( प्रश्नो० २।१२) इन्द्रियमनोभ्यः प्रागुत्पत्तिश्च प्राणस्य दृश्यते "एतस्माज्जायते प्राणो मनः× सर्वेन्द्रियाणि च" (मुण्डको० २।१।३) अतः प्राणानां करणवृत्तित्वं सामान्यम्। अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च प्राणानां करणत्वप्रदर्शनप्रकरणाद् विरुद्धं व्याख्यातं सूत्रमिदम् ॥३१॥

तत्र करणेषु—

क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥३२॥

( इन्द्रियवृत्तिः ) पूर्वोक्तानां मनःसहितैकादशेन्द्रियाणां वृत्तिः ( क्रमशः-अक्रमशः-च ) क्रमश एकैकेन्द्रियस्यैककविषये तथाऽक्रमशश्च सकृदनेकेन्द्रियद्वारानेकविषयेऽपि भवति यथावसरं शैघ्र्याद् भयादभ्यासाद्वा ॥३२॥

वृत्तिभेदा उच्यन्ते—

वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च + ॥३३॥

( वृत्तयः पञ्चतय्यः ) ता वृत्तयः पञ्चस्तरकाः पञ्चविधाः सन्ति ( क्लिष्टाः-अक्लिष्टाः-च ) अथ ता एव पञ्चविधा वृत्तयः क्लिष्टाश्चाक्लिष्टाश्चापि भवन्ति। वृत्तीनां पञ्चविधत्वं योगसूत्राद् विज्ञेयं तत्र "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" ( योग० १।६ ) क्लेशमूलाः क्लिष्टाः संसाराभिमुखास्तद्भिन्ना ख्यातिविषया विवेकाभिमुखा अक्लिष्टा ॥३३॥

पुनः—

तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥३४॥

( तन्निवृत्तौ ) वृत्तिनिवृत्तौ सत्याम् ( उपशान्तोपरागः ) उपशान्त

---

*"करणं त्रयोदशविधम…" (सांख्य० २।३८) इति विधानात् करणवृत्तिप्रसङ्गोऽत्र त्रयोदशानां करणानाम्।

※'मनसि' इति पदमन्तःकरणसामान्ये। ×'मनः' अन्तःकरणसामान्ये।

+'क्लिष्टा अक्लिष्टाः' पाठोऽनिरूद्धस्य।

उपरागोऽभिसम्बन्धो यस्य तथाविधः पुरुषः ( स्वस्थः ) स्वस्मिन् स्थितः स्वरूपतः शुद्धो भवति ॥३४॥

स च--

कुसुमवच्च मणिः ॥३५॥

( कुसुमवत्-च मणिः ) कुसुमवत्-चकारादकुसुमवदपि । अत्र वत्-प्रत्ययेन सप्तम्यामुपमा । यथा जपाकुसुमे जपाकुसुमाश्रये मणिस्तदुपरागवान् भवति पुनश्चाकुसुमवत्-जपाकुसुमाश्रयापगतः स्फटिको मणिः स्वरूपतः शुद्धोऽवतिष्ठते तथा पुरुषोऽपि वृत्तेरुपरागाद्रक्तस्तन्निवृत्तौ शुद्धः स्वस्थो भवति ॥३५॥

करणानां वृत्तिसम्बन्धः कथं पुरुषेण सह प्रवृत्त इत्यत्रोच्यते—

पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥३६॥

( करणोद्भवः पुरुषार्थम् ) करणोद्भवः खलु पुरुषार्थः पुरुषप्रयोजनाय ( अपि-अदृष्टोल्लासात् ) अदृष्टस्य भोगोन्मुखत्वात् सम्भवति ॥३६॥

यथा--

धेनुवद् वत्साय ॥३७॥

( वत्साय धेनुवत् ) वत्साय यथा धेनुः प्रवर्तते दुग्धं स्रावयितुं तथैव करणं प्रवर्तते पुरुषायादृष्टभोगं प्रदातुम ॥३७॥

तच्च—

करणं त्रयोदशविधमवरान्तरभेदात् ॥३८॥

( करणं त्रयोदशविधम् ) करणं खलु यस्योद्भवः पुरुषार्थस्तत् त्रयोदशविधं त्रयोदशप्रकारकमस्ति । कुतः ( अवरान्तरभेदात् ) बहिरन्तरभेदाद् बाह्याभ्यन्तरभेदात् । तत्र बुद्ध्यहङ्कारमनांसि त्वभ्यन्तराणि त्रीणि करणानि किलान्तःकरणानि, चक्षुर्वागादीनि तु दशेन्द्रियाणि करणानि बहिष्करणानि खलूच्यन्ते । इत्थं सर्वाणि करणानि पुरुषार्थानि त्रयोदश । अवान्तरपाठे तु ( अवान्तरभेदात् ) मनसोऽवान्तरभेदाद् रूपान्तरभेदात्, त्रैविध्यं बुद्ध्यहङ्कारमनोरूपमन्तःकरणं तस्मात्, यद्वाऽत्र, अवान्तरशब्दो नानार्थः, करणानां नानाभेदात् ॥३८॥

परन्तु—

इन्द्रियेषु साधकतमत्वयोगात् × कुठारवत् ॥३९॥

( इन्द्रियेषु साधकतमत्वयोगात् ) इन्द्रियेषु साधकतमत्वसंसर्गात् तानि करणानि (कुठारवत् ) यथा छिदायां प्रहरतो हस्तस्य संसर्गात् प्रहरन् सन् कुठारः करणत्वभाग भवति ॥३९॥

पुनश्च—

द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥४०॥

(द्वयोः) बाह्याभ्यन्तरयोरिन्द्रिययोः (प्रधानं मनः) प्रधानं करणमेकादशमुभयात्मकं मनः (लोकवत्-भृत्यवर्गेषु) यथा लोके भृत्यवर्गेषु स्वामी प्रधानो भवति, अत्रापि मनसः स्वामिभूतस्य भृत्यवर्गौ द्वौ ज्ञानेन्द्रियकर्मेन्द्रियाख्यौ ॥४०॥

कुतो मनसः प्रधानत्वमित्यत्र हेतुरुच्यते—

अव्यभिचारात् ॥४१॥

(अव्यभिचारात् ) मनसोऽव्यभिचारात्-तस्योभयात्मकत्वात् सर्वेन्द्रियवृत्तिषु व्याप्तत्वात् तदन्तरेण तेषां व्यापाराभावात् । नहि किञ्चनेन्द्रियं तद् व्यभिचरति तस्मात् ॥४१॥

अन्यो हेतुः—

तथाऽशेषसंस्काराधारत्वात् ॥४२॥

( तथा ) तथा ( अशेषसंस्काराधारत्वात् ) मनसोऽशेषसंस्काराधारत्वात् । मनो हि समस्तसंस्काराणामाधारोऽस्ति, यद्यत्खलु केनचिदिन्द्रियेण कर्म क्रियते तद्विषयकाः सर्वे संस्कारास्तत्र मनसि ह्याधीयन्ते तस्मान्मनः प्रधानं करणम् ॥४२॥

कथं हि मनसः संस्काराधारत्वमित्याकांक्षायामुच्यते—

स्मृत्याऽनुमानाच्च ॥४३॥

(स्मृत्या) स्मृर्भिवति, न च संस्कारमन्तरेण सा सम्भाव्यते । उक्तं हि "आत्ममनसोः संयोगविशेषात् संस्काराच्च स्वप्नः, तथा स्मृतिः"(वैशे० ९।२।६) संस्कारश्च पूर्वदृष्टविषयस्यावतिष्ठते (अनुमानात्-च) सति तदि-

× साधकतमत्वयोगात् 'अनिरुद्धपाठः । विज्ञानभिक्षोस्तु 'साधतमत्वगुणमोगात्'

न्द्रियविघातेऽपि तद्द्वारा पूर्वदृष्टविषयस्य संस्कारेण स्मृतिर्भवति हि तेनानुमीयते संस्काराधारो मनो बाह्येन्द्रियभ्यो भिन्नमिति ॥४३॥

स्मृतिश्च--

सम्भवेन्न स्वतः ॥४४॥

(स्वतः-न सम्भवेत्) स्मृतिः खलु स्वत एव संकारमन्तरेण न सम्भवेत् संस्कारश्च मनसा विना न सम्भवेत्। बाह्येन्द्रियाणां कार्यं तु विषयप्रत्यक्षीकरणमेव तस्मात्तेभ्यो भिन्नमान्तरं यद्वाऽभ्यरं करणं मनः प्रधानमिति निष्कर्षः ॥४४॥

अथ--

आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥४५॥

(गुणप्रधानभावः) स एष गुणप्रधानभावः-गौणप्रधानभावः (आपेक्षिकः) अपेक्षाकृतोऽस्ति, करणत्वं सर्वत्र समानम् (क्रियाविशेषात्) तत्तद्व्यापारविशेषाद् विशिष्टव्यापारात् ॥४५॥

तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत् ॥४६॥

(तत्कर्मार्जितत्वात्) पुरुषकर्मार्जितत्वात् करणस्य पुरुषकर्मानुसारतः सम्पद्यमानत्वात् (तदर्थम्-अभिचेष्टा) पुरुषार्थसाधनाय करणाभिचेष्टा-करणव्यापारो भवति (लोकवत्) यथा लोके येन पुरुषेण क्रयं प्रदाय यानादिकं करणं गृहीतं तस्य पुरुषस्यार्थसाधनाय हि तद् भवति ॥४६॥

पुनश्च--

समानकर्मयोगे बुद्धेः प्राधान्यं लोकवत्-लोकवत् ॥४७॥

(समानकर्मयोगे) पुरुषार्थाय पुरुषप्रयोजनाय सर्वकरणानां प्रयोजन-साधनकर्मयोगः समान एव, तथापि (बुद्धेः प्राधान्यम्) मनसोऽपेक्षया बुद्धेः प्राधान्यमस्ति तस्या महत्त्वात् (लोकवत्) यथा लोके यः खलु भवत्यन्तरङ्गतमस्तस्यैव प्राधान्यं भवति। राजप्रयोजनाय राजसभायां मुख्यराजपुरुषाः प्राधान्यं भजन्ते, तेषामपि मध्ये राजमन्त्री सर्वप्राधान्यभाग् भवति। तथैवात्र बाह्येन्द्रियाणां मध्ये प्राधान्यं मनसस्तदपेक्षया च बुद्धेःप्राधान्यमिति। लोकवत्, इतिद्विरुक्तिरध्यायपरिसमाप्तिसूचिका ॥४७॥

सांख्यदर्शने समाप्तो द्वितीयोऽध्यायः स्वामिब्रह्ममुनिभाष्य पतेः ॥४७॥

--:※:--

# तृतीयोऽध्यायः

अविशेषाद् विशेषारम्भः ॥१॥

( अविशेषात् ) सामान्यधर्मवतः–स्थूलं प्रति कारणतया सामान्यं सम्बन्धं प्रवर्तयतो महदादितन्मात्रपर्यन्तगणात् ( विशेषारम्भः ) विशेषाणां विशिष्टरूपेण व्यक्तानां पृथिव्यादीनां स्थूलभूतानामुत्पादो भवति ॥१॥

तस्माच्छरीरस्य ॥२॥

( तस्मात् ) पञ्चस्थूलभूतगणात् ( शरीरस्य ) स्थूलशरीरस्योत्पादो भवति ॥२॥

तद्बीजात् संसृतिः ॥३॥

( तद्बीजात् ) तस्य शरीरस्य बीजान्महत्तत्त्वादितन्मात्रपर्यन्ताद्-विशेषगणात् साशयाल्लिङ्गशरीररूपात् (संसृतिः) संसरणं देहाद्-देहान्तर-गमनं भवति "योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ।" ( मनु० ६।६३ ) ॥३॥

कदापर्यन्तं तद्बीजं महत्तत्त्वादिकं प्रवर्तते-इत्याकांक्षायामाह—

आविवेकाच्च प्रवर्तनमविशेषाणाम् ॥४॥

(च) अथ च ( अविशेषाणाम् ) महत्तत्त्वाहङ्कारतन्मात्राणां बीजभूतानाम् ( प्रवर्तनम् ) प्रवृत्तिः स्थूलशरीरनिर्माणाय ( आविवेकात् ) यावद् विवेको न जायेत तावद् भवति सति विवेके निवृत्तिरित्यर्थः ॥४॥

अथ च—

उपभोगादितरस्य ॥५॥

( इतरस्य ) अविशेषेभ्यो महदादिभ्यो लिङ्गदेहरूपेभ्य इतरस्य विशेषस्य स्थूलशरीरस्य प्रवर्तनं वर्तमानत्वम् ( उपभोगात् ) उपभोगहेतोर्भवति यावत्तस्योपभोगस्तावदेव स प्रवर्ततेऽवतिष्ठते, किन्तु लिङ्गदेहस्तु यावद् विवेको न जायेत तावत् तिष्ठत्येव नहि स्थूलशरीरेण नष्टेन सह तस्य विनाशो भवति ॥५॥

अपितु—

सम्प्रति परिष्वक्तो× द्वाभ्याम् ॥६॥

( सम्प्रति ) पूर्वसूत्रतः प्रकृत उपभोगोऽपेद्यते । उपभोगकाले ( द्वाभ्यां परिष्वक्तः ) स्थूलसूक्ष्मशरीरभ्यां परिवृतो भवति जीवात्मा ॥६॥

तत्र शरीरयोः—

मातापितृजं स्थूलं प्रायश इतरन्न ॥७॥

( स्थूलं प्रायशः–मातापितृजम् ) स्थूलं शरीरं प्रायशो मातापितृजं भवति, प्रायशः कथनेनारम्भसृष्टौ तदप्यमातापितृजमयोनिजं भवति तथा सम्प्रति च स्वेदजोद्भिज्जशरीरं चामातापितृजमयोनिजं भवति हि ( इतरत्–न ) स्थूलाद्भिन्नं सूक्ष्मशरीरं मातापितृजं न भवति ॥७॥

तयोः स्थूलसूक्ष्मशरीरयोः कस्य सुखदुःखभोगोपपत्तिरित्युच्यते—

पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥८॥

( पूर्वोत्पत्तेः–एकस्य भोगात् ) पूर्वा सर्गादावुत्पत्तिर्यस्य तथाभूतस्य पूर्वोत्पत्तिमत एकस्य लिङ्गशरीरस्य भोगात् सुखदुःखभोगसम्भवात् ( तत्कार्यत्वम् ) सुखदुःखभोगकार्यत्वं सुखदुःखप्रतीयमानत्वं भवति ( इतरस्य न ) स्थूलशरीरस्य न भवति, मृतशरीरेऽदर्शनात् ॥८॥

सूक्ष्मशरीरं च—

सप्तदशैकं लिङ्गम् ॥९॥

अत्र वक्तव्यम—

अनिरुद्धवृत्तौ सूत्रार्थोऽष्टादशपदार्थपरः कृतस्तत्र लिङ्गशरीरमष्टादशपदार्थकं मतम् "सप्तदश च एकञ्च अष्टादश तैः लिङ्गं सूक्ष्मदेहः उत्पद्यते। बुद्ध्यहङ्कारमनांसि पञ्च सूक्ष्मभूतानि दश इन्द्रियाणीति" ( अनिरुद्धः ) विज्ञानभिक्षुभाष्येऽनिरुद्धकृतोऽर्थः खण्डितः "न तु सप्तदशमेकञ्चेत्यष्टादशतया व्याख्येयम्" (विज्ञानभिक्षुः) परन्तु विज्ञानभिक्षुभाष्येऽपि पदार्थास्तु तथैवाष्टादश मताः सूक्ष्मशरीरस्य केवलमहङ्कारस्य बुद्धावन्तर्भावं प्रदर्श्य "एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश, अहङ्कारस्य बुद्धावेवान्तर्भावः।" ( विज्ञानभिक्षुः ) किमेतेन कथनप्रकारेण पदार्थास्तु तथैवाष्टादशात्रापि स्वीकृताः परन्तु न

× 'परिष्वक्तः' पाठोऽनिरुद्धवृत्तेः। विज्ञानभिक्षुभाष्यस्य तु 'परिमुक्तः' पाठः।

सरलसरण्या-सारल्येन नासिका न गृहीता किन्तु वक्रतामवलम्ब्य पृष्ठतो हस्तं परिभ्राम्य गृहीता। अहङ्कारस्तु सांख्यपरिगणिते पञ्चविशंतिगणे स्वतन्त्रः पदार्थः, कुतो हि तस्य बुद्धावन्तर्भावः कल्प्यते। अन्यैः स्वामिहरिप्रसादादिभाष्यकारैरपि तथैवाष्टादशपदार्थान् स्वीकृत्यापि साहङ्कारा बुद्धिरिति बुद्धावहङ्कारस्यान्तर्भावं प्रदर्श्यार्थो विहितः। सैषा कथनप्रक्रिया सांख्यपरिगणनप्रकारात् सूत्रपदेभ्यश्च विरुद्धाऽस्ति। अथ च विज्ञानभिक्षुभाष्ये सूत्रस्थम् "एकम्" इति पदमाश्रित्य सर्वेषां लिङ्गशरीरमेकमित्यपि प्रतिपादितं तदपि न युक्तं यत उक्तं हि चतुर्थे सूत्रे "आविवेकाच्च प्रवर्तनमविशेषाणाम्" (४) विवेकपर्यन्तमेव लिङ्गशरीरं तिष्ठति येन पुनर्जन्मार्थं देहान्तरे जीवात्मा संसरति तथा च वेदान्तदर्शनेऽपि "तदापीतः संसारव्यपदेशात्" (वेदा० ४। २। ८) प्रत्येकस्य सूक्ष्मशरीरं पृथक् तच्च यावन्मोक्षो न जायते तावत्प्रवर्तते। अस्तु। अत्र सूत्रेऽष्टादशपदार्थास्तु सर्वैरपि भाष्यकारैर्लिङ्गशरीरस्याभिमताः, सप्तदशत्वं कथनमात्रमहङ्कारस्य बुद्धावन्तर्भावं प्रदर्श्य। तस्मात्सारल्यमवलम्ब्य सूत्रार्थेन भवितव्यमित्येवास्माकमभीष्टं तथैव मत्वेदानीमर्थो विधीयते—

(सप्तदश-एकं लिङ्गम्) पञ्च तन्मात्राणि मनःसहितान्येकदशेन्द्रियाण्यहङ्कारश्च सप्तदश तथैकं लिङ्गं महत्तत्त्वं बुद्धिरित्यर्थः। लिङ्गशब्देन महत्तत्त्वमभिप्रेयते "विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि-लिङ्गमात्रं महत्तत्त्वम्" (योग० २। १९ व्यासः) कथं हि पृथक्-पृथङ् निर्देशः 'सप्तदश' पुनः 'एकं लिङ्गम्' कथं न 'अष्टादश' इत्येवोच्येत। तत्र लिङ्गस्य महत्तत्त्वस्य प्राधान्यप्रदर्शनाय, यदिदमत्र सूक्ष्मशरीरे प्रमुखं लिङ्गं महत्तत्त्वं तदेव प्रमुखं लिङ्गमाश्रित्य हीदं लिङ्गशरीरमुच्यते। यथा हि पञ्चभूतेषु सर्वस्थूला पृथिवी प्राधान्येन तस्मात् पञ्चभूतनिमित्तकमपि शरीरं स्थूलशरीरं पार्थिवमुच्यते तत्र पृथिवीप्राधान्यात्। तथैवात्र 'एकं लिङ्गम्' इति प्राधान्यमवलम्ब्य पृथङ् निर्देशादिदं लिङ्गशरीरम्। यत्खलु वचनमुद्धृतं विज्ञानभिक्षुभाष्ये "कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते। ससप्तदशकेनापि राशिना युज्यते च सः॥" कुत्रत्यमिदं वचनमिति तु न सूचितं तत्प्रामाणिकशास्त्रस्याप्रामाणिकस्येति न ज्ञायते। तथापि तथाभूतग्रन्थस्यापि वचनेऽस्मिन् न विज्ञानभिक्षुभाष्यपुष्टिर्भवति यथा विज्ञानभिक्षुणा सूत्रार्थमन्यथा कुर्वताऽपि संगृहीता ह्यष्टादश पदार्था लिङ्गशरीरस्य तथैवात्र वचनेऽपि

प्रतिभान्ति पदार्थाष्टादशत्वम् "ससप्तदशकेन राशिना कर्मात्मा पुरुषः" अत्र, ससप्तदशको राशिः, पुनस्तेन सह कर्मात्मा पुरुषः-अहङ्कारयुक्तो जीव उक्तः। "निगुर्णत्वात् तदसम्भवादहङ्कारधर्मा ह्येते" (सांख्य० ६।६२) अहङ्कारः प्रक्रियते पुनः "विशिष्टस्य जीवत्वम्..." (सांख्य० ६।६३) अहङ्कारविशिष्ट आत्मा जीवः, पश्चात् "अहङ्कारकर्त्राधीना कार्यसिद्धिः..." (सांख्य० ६।६४) कर्तृत्वमहङ्कारस्य यद्वाऽहङ्कारविशिष्टस्यात्मनो भवति तथैवात्रोद्धृतवचनेऽपि 'कर्मात्मा पुरुषः' अहङ्कारो निर्दिष्टः ससप्तदशकेन राशिना सह सङ्गतस्तदाष्टादशत्वं तु जातमेव लिङ्गदेहपदार्थानाम् ॥६॥

ननु लिङ्गशरीरं तु सर्वेषां समानं पुनर्व्यक्तिभेदो देवमनुष्यतिर्यग्भेदः कथमित्याकांक्षायामुच्यते—

व्यक्तिभेदः कर्मविशेषात् ॥१०॥

( व्यक्तिभेदः ) तथाविधो व्यक्तिभेदः स्थूलशरीरभेदो देवमनुष्यतिर्यग्देहभेदः ( कर्मविशेषात् ) कर्मविशेषाददृष्टविशेषाद् भवति ॥१०॥

ननु कर्मविशेषो धर्माधर्मरूपादृष्टविशेषस्तु खल्वात्मानुवर्ती पुनः कथं तेन व्यक्तिभेदः स्थूलशरीरे सम्भवति । अत्रोच्यते—

तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥११॥

( तदधिष्ठानाश्रये देहे ) भवतु कर्मण आत्मानुवर्तित्वं किन्तु तस्यात्मनोऽधिष्ठानं लिङ्गशरीरं लिङ्गशरीरस्याश्रयः स्थूलदेहस्तत्र स्थूलदेहे ( तद्वादात् तद्वादः ) लिङ्गस्य देहवादात् तस्य स्थूलदेहस्य तद्वादो व्यक्तिदेहवादोऽतस्तस्य व्यक्तिभेदः ॥११॥

भवतु तर्हि लिङ्गशरीरे हि धर्माधर्मकर्मरूपादृष्टस्य फलं किमर्थो व्यक्तिभेदः स्थूलशरीरे । अत्रोच्यते--

न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥१२॥

( स्वातन्त्र्यात्--न तदृते ) स्थूलशरीरेण विना स्वातन्त्र्यात खलु लिङ्गशरीरेऽदृष्टस्य फलनिष्पत्तिर्न भवति ( छायावत्-चित्रवत्-च ) यथा छाया चित्रं वाऽऽश्रयेण विना नावतिष्ठते, तस्मात् स्थूलशरीरे ह्यदृष्टवशाद् व्यक्तिभेदेन भाव्यम् ॥१२॥

ननु लिङ्गशरीरं न चेतनं किन्तु जडमस्ति पुनर्जडस्यापि जडमाश्रयोऽदृष्टफलायेति कथं युज्यते । अत्रोच्यते--

मूर्तत्वेऽपि न सङ्घातयोगात् ॥१३॥

( मूर्तत्वे-अपि न ) मूर्तत्वमत्र जडत्वं गृह्यते । लिङ्गशरीरस्य मूर्तत्वे जडत्वेऽपि नादृष्टफलवत्त्वम् ( सङ्घातयोगात् तरणिवत् ) यथा तरणिः सूर्यप्रकाशः सङ्घातस्य पिण्डीभूतस्य स्थूलस्य योगाद् व्यक्तीभवति तथैव लिङ्गशरीरं जडं सदपि स्थूलशरीरमपेक्षते तस्माद् व्यक्तिभेदस्तत्रो चितः ॥१३॥

लिङ्गशरीरं किम्परिमाणम् । अत्रोच्यते--

अणुपरिमाणं तत्कृतिश्रुतेः ॥१४॥

( अणुपरिमाणम् ) लिङ्गशरीरं खल्वणुपरिमाणमस्ति । अत्राणु-शब्देन विभुत्वनिषेधमात्रं तेन तस्यैकदेशित्वमभिप्रेयते । कुतः ( तत्कृति-श्रुतेः ) तस्य कार्यत्वश्रवणात् । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मुण्ड० २।१।३ ) ॥१४॥

अन्यो हेतुः—

तदन्नमयत्व (ादि) श्रुतेश्च ॥१५॥

( तदन्नमयत्वादिश्रुतेः-च ) अथ च तस्य लिङ्गशरीरस्यान्नमयत्वादि-विषयिका श्रुतिरस्ति "अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयीवाक्" ( छान्दो० ६।५।४ ) ॥१५॥

पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद् राज्ञः ॥१६॥

( लिङ्गानां संसृतिः पुरुषार्थम् ) लिङ्गशरीराणां यद्वा लिङ्गशरीर-रूपाणां महत्तत्त्वादीनां बुद्ध्यादीनां पञ्चतन्मात्रान्तानां वा देहे संसरणं प्रापणं पुरुषार्थमात्मार्थमस्ति । उक्तं यथा पूर्वमपि "आत्मार्थत्वात् सृष्टेः [ महदादिक्रमेण पञ्चतन्मात्रान्तायाः ]" ( सांख्य० २।११ ) (राज्ञः सूप-कारवत्) यथा राज्ञः सूपकारस्य पाककर्तुः प्रवृत्ती राजार्था भवति ॥१६॥

अथ च--

पाञ्चभौतिको देहः ॥१७॥

( देहः ) मांसादिभिरुपचितो देहः स्थूलदेहः (पाञ्चभौतिकः) पञ्च-भिर्भूतैर्निर्वृत्तः-सम्पन्नोऽस्ति । स्थूलशरीरं पाञ्चभौतिकम् ॥१७॥

चातुर्भौतिकमित्येके ॥१८॥

( चातुर्भौतिकम् ) आकाशमन्तरेण पृथिव्यादिभिश्चतुर्भिर्भूतैर्निर्वृत्तमस्ति स्थूलशरीरम् ( इति–एके ) इत्थमेके मन्यन्ते ॥१८॥

ऐकभौतिकमित्यपरे ॥१९॥

( ऐकभौतिकम् ) स्थूलशरीरमेकेन भूतेन पृथिव्या निर्वृत्तम् ( इति-अपरे ) एवमपरे मन्यन्ते ॥१९॥

देहे चैतन्यविचार:--

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥२०॥

( चैतन्यं सांसिद्धकं न ) देहे यच्चैतन्यं तत् सांसिद्धिकं स्वाभाविकं देहस्वभावोद्भवं देहप्रकृतिसम्भवं नास्ति देहस्य यानि भूतानि कारणानि तेभ्यो निष्पन्नं नास्ति । यतः ( प्रत्येकादृष्टेः ) प्रत्येकस्मिन् पृथक् पृथग्भूते तस्य चैतन्यस्यादृष्टत्वात्, नहि पृथक्-पृथग्भूते चैतन्यं चैतन्यमात्रा वोपलभ्यते तत्र तु जडत्वमेवावतिष्ठते ॥२०॥

देहचैतन्ये दोषश्चायं प्रसज्यते--

प्रपञ्चत्वाद्यभावश्च + ॥२१॥

( प्रपञ्चत्वाद्यभावः–च ) प्रगताः प्रस्थिताः पञ्च प्राणा यस्माद् देहात् स प्रपञ्चो मृतदेहस्तस्य भावः प्रपञ्चत्वं मृतत्वं तस्य मृतत्वस्य मरणस्य तथादिना सुषुप्तिमूर्च्छयोरपि ग्रहणम् , मृतत्वसुषुप्तिमूर्च्छानामभावः प्रसज्यते देहस्य चैतन्ये सति यतो देहस्तु मृतत्वसुषुप्तिमूर्च्छासु खल्वपि तिष्ठत्येव तदा तद्धर्मेणापि स्थातव्यमेव ॥२१॥

पुनराशङ्क्य समाधत्ते--

मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सौक्ष्म्यात् सांहत्ये तदुद्भवः ॥२२॥

(मदशक्तिवत्–चेत् ) न स्याद् देहस्य सांसिद्धिकं स्वाभाविकं चैतन्यं किन्तु मदशक्तिवद् देहे प्रादुर्भूतं भवेत्, यथा सुरायां मदशक्तिः समुद्भवति । मदशक्तिनाशाद् देहस्य मृतत्वादिप्रसङ्गो भवेदतो न दोष इति

+ एषोऽनिरुद्धवृत्तिपाठः । विज्ञानभिक्षुभाष्यस्य तु "प्रपञ्चमरणाद्यभावश्च"

चेदुच्चेत तर्हि ( सौक्ष्म्यात् प्रत्येकपरिदृष्टे ) सौक्ष्म्याद् वैद्यकशास्त्र-प्रतिपादितमादकत्वपरीक्षणप्रकारात् सूक्ष्मभावेन सुरायाः प्रत्येकपदार्थ-गतपरिदृष्टे मदशक्तित्वे सति (तदुद्भवः सांहत्ये) तस्याः मदशक्ते-रुद्भवो भवति तेषां सुरापदार्थानां सति सम्मेलने। न तथा देहकारणेषु भूतेषु प्रत्येकस्मिन् चैतन्यमुपलभ्यते, दृष्टान्तवैपरीत्याद् देहचैतन्यवादो न युक्तः ॥२२॥

भवतु देहधर्मश्चैतन्यं न, चेतनः खलु पुरुषो देहाद् भिन्नः पुनस्तस्य चेतनस्य देहात् कथं मुक्तिः स्याद् यतो हि लिङ्गशरीरस्य संसृतिस्तु स्थूल. देहधारणाय प्रक्रमते हि। अत्रोच्यते--

ज्ञानान्मुक्तिः ॥२३॥

( ज्ञानात्-मुक्तिः ) ज्ञानात् खलु सर्वप्रक्रमज्ञानाद् विवेकसाक्षा-त्काराद् भवति मुक्तिः पुरुषस्य चेतनस्य ॥२३॥

अथ च--

बन्धो विपर्ययात् ॥२४॥

( विपयर्यात्–बन्धः ) तद्विपरीतादज्ञानात् प्रक्रमस्याविवेकाद् भवति पुरुषस्य चेतनस्य देहे बन्धः ॥२४॥

तत्र मुक्तिविषये--

नियतकारणत्वान्न समुच्चयविकल्पौ ॥२५॥

( नियतकारणत्वात् ) मुक्तिप्राप्तौ ज्ञानस्य नियतकारणत्वमनिवार्य-कारणत्वमस्ति, तस्मात् (समुच्चयविकल्पौ न) साधनान्तरेण सहास्य समुच्चयभावो विकल्पो वा नास्ति। यद्यप्युच्यते "विद्याकर्मणी समन्वार-भेते" (बृह० ४।४।२) ज्ञानकर्मणोः समुच्चयः, परन्तु स एष ज्ञानकर्मणोः साधनत्वेन समुच्चयो न मुक्तिविषयकोऽपितु पुनर्जन्मप्राप्तौ वर्णितः "एष आत्मा निष्क्रामति चक्षुष्टो...तमुत्क्रामन्तं प्राणोऽनूत्क्रामति...तं विद्याकर्मणी समन्वारभेते" (बृह० ४।४।२) अथ च यत्र क्वचिद् विकल्पः प्रतिभासते "अविद्यया मृत्युं तीर्त्वा" (यजु० ४०।१४) इति कथनात् तत्र कर्मणो ज्ञानाङ्गत्वं लक्ष्यते न हि कर्म स्वतन्त्रं विकल्परूपेण मुक्ति-साधनम्। उक्तं हि श्रुतौ ज्ञानस्यैव मुक्तिसाधनत्वम् "वेदाहमेतं पुरुषं

महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥" (यजु० ३१।१८) ॥२५॥

पूर्वकथने युक्तिमाह—

स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥२६॥

(स्वप्नजागराभ्याम्–इव मायिकामायिकाभ्याम्) स्वप्नजागरणाभ्यां साधनाभ्यां कल्पिताकल्पितानुभवफलाभ्यां सदृशे ज्ञानकर्मणी स्तः, यथा स्वप्नजागरणयोः समुच्चयो न भवति विरुद्धत्वात्, तथा न हि विकल्पो भवति तयोर्भिन्नभिन्नफलवत्त्वात् तथैव (उभयोः) ज्ञानकर्मणोः समुच्चय-विकल्पयोर्विषयेऽपि विज्ञेयम् । अतः (पुरुषस्य मुक्तिः–न) तयोः समुच्चयेन विकल्पेन वा पुरुषस्य मुक्तिर्भवतीति न सम्यक् ॥२६॥

पूर्वपक्षत्वेनोच्यते—

इतरस्यापि नात्यन्तिकम् ॥२७॥

(इतरस्य-अपि) मुक्तिप्राप्तौ ज्ञानमेव नियतकारणं न तत्सहयोगि कर्म तर्हीतरस्य यज्ञादिकर्मतो भिन्नस्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपस्य योगाभ्यासनामककर्मणोऽप्यनुष्ठानात (आत्यन्तिकं न) दुःखात्यन्तनिवृत्तिरूपमात्यन्तिकं मुक्तिपदं न सिध्येत् कर्मसामान्याद्-योगाभ्यासस्यपि तथा ज्ञानतोऽतिरिक्तत्वात् । उच्यते च श्रुतौ मुक्तिसाधनत्वेन योगाभ्यासोऽपि ज्ञानसहयोगी "वेदान्तविज्ञान-सुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" (मुण्ड० ३।२।६) ॥२७॥

अपरञ्च—

सङ्कल्पितेऽप्येवम् ॥२८॥

(सङ्कल्पिते–अपि) सङ्कल्पिते मानसे जपेऽपि (एवम्) एवं पूर्ववत् खलु नात्यन्तिकं मुक्तिफलं सिध्येत् । उच्यते हि मानसं कर्म ध्यानं मुक्ति-साधनत्वेन "ओमित्येव ध्यायथात्मानं स्वस्ति वः पाराय तमसः परस्तात्" (मुण्ड० २।२।६) तथा "तज्जपस्तदर्थभावनम्" (योग० १।२८) पूर्वं चेदं च सूत्रमनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चाप्रासङ्गिकत्वेन व्याख्यतम् ॥२८॥

सूत्रद्वयोक्तः पूर्वपक्षः समाधीयते—

भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥२६॥

(भावनोपचयात्-शुद्धस्य) यमनियमादियोगाभ्यासानुष्ठानात् तथा मानसजपध्यानात् खलु भवति भावनोपचयो पवित्रभावनानां परमात्मानुरागभावनानां च प्रवृद्धिस्ततश्च योगाभ्यासी ध्यानी वा शुद्धः पवित्रो वृत्तिरहितो वासनारहितश्च जायते तस्य शुद्धस्य पवित्रस्य वृत्तिरहितस्य वासनारहितस्य योगाभ्यासिनो ध्यानिनो वा (सर्वं प्रकृतिवत्) मुक्तिप्राप्तौ सर्वमेतदुक्तं साधनं प्रकृतिवद् भवति प्रकृतिर्मूलं मूलसाधनवद् भवति। मूलसाधनं ज्ञानं नियतकारणं तद्वज्ज्ञानानन्यत् तदङ्गं भवति। उक्तं यथा "योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" ( योग० २।२८ ) तथा "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः" (मुण्डको० ३।२।६)। अथवा ( सर्वं प्रकृतिवत् ) प्रकृतिः स्वभावः, यथास्वभावं सर्वं भवति, स्वभावो हि पुरुषस्य नित्यशुद्धबुद्धमुक्तत्वम् "न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" (सांख्य० १।१६) इति नित्यशुद्धबुद्धमुक्तस्वभावः पुरुषः तेन नित्यशुद्धबुद्धमुक्तस्वभाववत्त्वं सम्पद्यते तथा "अध्यात्मयोगाधिगमेन मत्वा धीरो हर्षशोकौ जहाति" (कठो० १।२।१२) यद्वा ( सर्वं प्रकृतिवत् ) प्रकृतिः खलु सत्त्वरजस्तमसां साम्यावस्था समावस्था गुणचेष्टारहिता तथैव तस्य सर्वं करणं चित्तमन्तःकरणं गुणवैषम्यरहितं गुणाऽधिकाररहितं भवति ॥२६॥

भवतु योगाभ्यासध्यानविषयस्य मुक्तिप्राप्तौ ज्ञानाङ्गतया साधनभावेन वाऽनुष्ठेयत्वं कथं तत्सेव्यमिति विव्रियते—

रागोपहतिर्ध्यानम् ॥३०॥

( रागोपहतिः—ध्यानम् ) संसारसक्तिरिन्द्रियभोगप्रवृत्तिर्वा रागः, तस्य खलूपशमो निवृत्तिर्ध्यानं मनसः स्थिरीभावः ॥३०॥

ध्यानसाधनम्—

वृत्तिनिरोधात् तत्सिद्धिः ॥३१॥

( वृत्तिनिरोधात् ) प्रमाणादिपञ्चवृत्तीनां निरोधात् (तत्सिद्धिः) ध्यानसिद्धिर्भवति ॥३१॥

कथं पुनर्वृत्तिनिरोधो जायते । अत्रोच्यते—

धारणाऽऽसनस्वकर्मणा तत्सिद्धिः ॥३२॥

(धारणाऽऽसनस्वकर्मणा) धारणयाऽऽसनेन स्वकर्मणा च (तत्सिद्धिः) वृत्तिनिरोधस्य सिद्धिर्भवति ॥३२॥

अथ च--

निरोधश्छर्दिविधारणाभ्याम् ॥३३॥

(निरोधः) निरोधो धारणार्थः । मनसो निरोधो देशबन्धो धारणारूपः ( छर्दिविधारणाभ्याम् ) प्राणस्य छर्दनेन वेगाद् बहिर्निःसारणेन स्तम्भनेन च सम्पद्यते ॥३३॥

स्थिरसुखमासनम् ॥३४

( स्थिरसुखम्-आसनम् ) शरीरस्य स्थिरं सुखं यस्मिन् भवति तथाभूतं शरीरचेष्टारहितं शरीरसुखसम्पादकमासनं विधेयम ॥३३॥

स्वकर्म विषये--

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥३५॥

( स्वकर्म ) स्वकर्म खलु ( स्वाश्रमविहितकर्मानुष्ठानम ) स्वाश्रमस्य मुमुक्षोराश्रमस्य संन्यासाश्रमस्य विहितं यदहिंसादिकर्मानुष्ठानं तत्सेवनीयम् ॥३५॥

पुनश्च—

वैराग्यादभ्यासाच्च ॥३६॥

( वैराग्यात् ) वृत्तिनिरोधो वैराग्याद् द्विविधादपरात्पराच्च विषयदोषदर्शनात् तथा ज्ञानप्रसादमात्रात् "ज्ञानस्यैव पराकाष्ठा वैराग्यम्" ( योग० १।१६ व्यासः ) तथा ( अभ्यासात् च ) ध्यानाभ्यासाच्च भवति ॥३६॥

अधुना विपर्ययविषयमाह--

विपर्ययभेदाः पञ्च ॥३७॥

(विपर्ययभेदाः पञ्च) ज्ञानप्रतिपत्तिर्णो विपर्ययस्य मिथ्याज्ञानस्यभेदाः पञ्च सन्ति ॥३७॥

विपर्ययस्य कारणं खल्वशक्तिरुच्यते--

अशक्तिरष्टाविंशतिधा ॥३८॥

( अशक्तिः–अष्टाविंशतिधा ) अशक्तिः खल्वष्टाविंशतिभेदयुक्ता भवति ॥३८॥

पुनस्तत्कारणं तुष्टिमाह—

तुष्टिर्नवधा ॥३९॥

(तुष्टिः–नवधा) तुष्टिस्तु नवप्रकाराऽस्ति ॥३९॥

तस्याः कारणं सिद्धिः सा च—

सिद्धिरष्टधा ॥४०॥

( सिद्धिः–अष्टधा ) सिद्धिः खल्वष्टविधा भवति ॥४०॥

अत्र वक्तव्यम्—

"विपर्ययभेदाः पञ्च" ( ३७ ) "अशक्तिरष्टाविंशतिधा" ( ३८ ) "तुष्टिर्नवधा" (३९) "सिद्धिरष्टधा" (४०) इति चतुःसूत्रीमुक्त्वा तथैव "अवान्तरभेदाः पूर्ववत्" (४१) "एवमितरस्याः" (४२) "आध्यात्मिकादिभेदान्नवधा तुष्टिः" (४३) "ऊहादिभिः सिद्धिरष्टधा" (४४) एषा चतुःसूत्री पुनरुक्ता, सैषा पुनरुक्तिरयुक्ता प्रतिभाति, मन्येऽहमत्रैषा पुनरुक्तिरियती हि न कृताऽऽसीत् सूत्रकारेण किन्तु सविवरणा कृता भवेत्, कालवशाद् यद्वा लिपिलेखकविभ्रमादथवा कस्यचिद् भाष्यकारस्याज्ञानात् तत्रस्थविवरणवचनानि सूत्रबाह्यानि मत्वा पृथक्कृतानि स्युः पुनश्चाल्पविवरणेन प्रायः संख्यानिर्देशेन सह सैषा पुनरुक्तिरवशिष्टा भवेदिति मे मतिः । द्वितीया विचारणा—"अवान्तरभेदाः पूर्ववत्" (४१) इति सूत्रतः 'पूर्ववत्' शब्दः सर्वत्रोत्तरेषु त्रिषु सूत्रेष्वनुपज्यते पूर्वाचार्यकृतविवरणवदर्थे तदा "विपर्ययभेदाः पञ्च"···(३७-४०) इत्याद्या पूर्वा चतुःसूत्री निरर्थिका भवति । तृतीया विचारणा—तत्रैव पूर्वचतुःसूत्र्याम् "विपर्ययभेदाः पञ्च पूर्ववत्" (३७) इति सूत्ररचनया भाव्यं तत एव 'पूर्ववत्' शब्दः पुर्वचतुःसूत्रीस्थेषु त्रिष्वन्येष्वपि सूत्रेषु किलानुवर्तनीयः, पुनरुत्तरचतुःसूत्री स्यादनावश्यकी । तत्रोभयचतुःसूत्रीरक्षणाय प्रथमा विचारणा गरिष्ठा युक्ता च सा हि खल्वस्माभिरभीष्यते ॥

विपर्ययादीनां चतुर्णामपि विवरणं क्रमशः प्रदर्शयति सूत्रकारस्तत्र पूर्वं विपर्ययमाह—

अवान्तरभेदाः पूर्ववत् ॥४१॥

( पूर्ववत्–अवान्तरभेदाः ) पूर्ववदिति पूर्वस्य पञ्चेत्यनुषज्यते। पूर्वस्य प्रक्रमस्य विपर्ययस्यैकस्यापि सतः पञ्चावान्तरभेदाः सन्ति तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति नामभिः "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्–तमोमोहोमहामोहस्तामिस्रोऽन्धतामिस्र इति" (योग० १।८ व्यासः ) ॥४१॥

अशक्तिमाह—

एवमितरस्याः ॥४२॥

( एवम्–इतरस्याः ) एवं पूर्ववदेवाष्टाविंशतिविधत्वमवान्तरभेदादेकस्या अपि सत्याः खल्वनन्तराया अशक्तेर्विज्ञेयं तत्र–एकादशेन्द्रियाणां वधा इन्द्रियाणामेकादशाशक्तयः, सप्तदशाशक्तयस्तु नवतुष्टीनां तथाष्टसिद्धीनां विघातानवलम्ब्य जायन्ते ॥४२॥

तुष्टिमाह—

आध्यात्मिकादिभेदान्नवधा तुष्टिः + ॥४३॥

( आध्यात्मिकादिभेदात्-नवधा तुष्टिः ) आध्यात्मिकाद्यवान्तरभेदान्नवधा तुष्टिर्भवति। आत्मन्यधिष्ठितत्वादाध्यात्मिकी तुष्टिः स्वात्मस्थितिपरितोषरूपेतियावत्। आदिशब्देन बाह्येषु विषयेषु दोषदर्शनात्तेभ्यो घृणारूपा यद्वा वैराग्यरूपा तुष्टिर्बाह्या। एवं तुष्टिद्वयं नवविधं तत्राध्यात्मिक्याश्चत्वारो भेदाः, बाह्यायाश्च पञ्च भेदाः सन्ति। आध्यात्मिक्यस्तुष्टयः प्रकृत्युपादानकालभागाख्याः क्रमशोऽम्भः सलिलमोघो वृष्टिरित्यवान्तरनामतश्च प्रसिद्धाः। तासु–प्रकृतिः परिणामिनी नाहं परिणामी किन्त्वहं नित्यशुद्धबुद्धमुक्तस्वभावो न मया तत्परिणामतापः स्वस्मिन् खल्वारोपणीयो नान्यो विवेकदर्शनप्रयासो विधेय इति प्रकृतिविषयाऽम्भो नाम तुष्टिः। प्रव्रज्याव्रतोपादानात् प्राकृतिकसम्बन्धाद्विमुक्तोऽहं नेदानीं तापप्रसङ्गो न च ध्यानापेक्षेति तूपादानाख्या प्रव्रज्योपादानरूपा सलिलं नाम तुष्टिः। ध्यानं बहुकालमनुष्ठितं मयाऽतो भविष्यत्येव ब्रह्मसाक्षात्कारोऽलमग्रे ध्यानाभ्यासेनेति कालाख्या खल्वोघः 'ध्यानसंग्रहः' नाम तुष्टिः। स्वतो भाग्यात् साक्षात्कारो भविष्यत्यस्मि ह्यहं भाग्यवान् लब्ध-

+ "आध्यात्मिका···" पाठो विज्ञानभिक्षुभाष्यस्य। 'आध्यात्मिक्या' अनिरुद्धवृत्तेः।

समाधिप्रज्ञोऽहमिति भाग्याख्या वृष्टिस्तुष्टिः । बाह्यास्तुष्टयस्तु बाह्यविषयोपरमाद् भवन्ति विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनाद् भवन्ति । तत्र गन्धादिविषयाणामर्जनदोषदर्शनाद् या भवति सा पारं नाम तुष्टिः । या रक्षणदोषदर्शनाद् भवति सुपारं नाम सा तुष्टिः । या क्षयदोषदर्शनाद् भवति पारपारं नाम सा तुष्टिः । या सङ्गदोषदर्शनाद् भोगदोषदर्शनाद् भवति सा तुष्टिरनुत्तमाम्भो नाम । या हिंसादोषदर्शनाद् भवति यन्नानुपहत्य भूतानि भोगसिद्धिरेवम्भूता सा तुष्टिरुत्तमाम्भो नाम ॥४३॥

सिद्धिमाह—

ऊहादिभिः सिद्धिरष्टधा ॥४४॥

( ऊहादिभिः सिद्धिः–अष्टधा ) ऊहादिभिरवान्तरभेदैः सिद्धिरष्टधा भवति । तत्र गुरुमुखादनधीत्य स्वयमध्ययनाज्ज्ञानलाभोऽध्ययनसिद्धिस्तारं नाम । स्वयमप्यध्ययनं न कृत्वा शब्दमेव श्रुत्वा ज्ञानोत्पत्तिः शब्दसिद्धिः सुतारं नाम । शब्दमप्राप्यापि ज्ञानप्रादुर्भाव ऊहः सिद्धिस्तारतारं नाम । ऊहनमन्तरेणाप्यभीष्टस्य प्राप्तिरिति प्राप्तिसिद्धी रम्यकं नाम । बाह्यपदार्थमनपेक्ष्य नैर्मल्यं शुद्धिसिद्धिः सदा मुदितं नाम । स्वत एवाध्यात्मिकाधिभौतिकाधिदैविकदुःखविमुक्तिरिति विमुक्तिसिद्धिस्त्रिधाविमुक्तिसिद्धिः प्रमोदमुदितमोदमाननामिका ॥४४॥

तत्र सिद्धिषूहादिषु—

नेतरादितरहानेन विना ॥४५॥

( इतरहानेन विना-इतरात्-न ) इतरहानेन स्वस्माद्भिन्नमितरं तच्च पूर्ववर्ति तद्धानेन विना तस्य हानमन्तरेण तदपायमन्तरेण तदभावमन्तरेणेतरात् तद्भिन्नादुत्तरवर्तिनो धर्मात् सिद्धिर्न भवति सिद्धिर्नोच्यते । तद्यथा—अध्ययनसिद्धिस्तु गुरुमुखाध्ययनेन विना स्वयमध्ययनाद् भवति तदग्रे शब्दसिद्धिः स्वयमध्ययनेन विना शब्दादेव भवति पुनः शब्दहानेन शब्दमन्तरेण खलूहाद् भवति ह्यूहसिद्धिः । तथैव प्राप्तिसिद्धिः प्राप्तेः पूर्ववर्तिन ऊहहानेन सङ्कल्पमन्तरेणैवाभीष्टप्राप्तिः प्राप्तिसिद्धिर्भवति । अभीष्टप्राप्तिमन्तरेण यन्नैर्मल्यं सा शुद्धिसिद्धिर्न सा प्राप्तिहानेन विना । शुद्धिमनपेक्ष्यैव शोधनहानेन भवत्याध्यात्मिकाधिभौतिकाधिदैविकदुःखनिवृत्तिः सा प्रसादसिद्धिर्दुःखविमुक्तिसिद्धिः कथ्यते । अस्य सूत्रस्य विज्ञानभिक्षुभाष्येऽन्यथाऽऽलपितं तत्र योगदर्शन-

प्रतिपादितानां मन्त्रतपःसमाधिसिद्धीनां खण्डनं कृतं सूत्राभिप्रायमविज्ञाय सूत्रस्थस्य 'इतरात्' शब्दात् सांख्यसिद्धितो भिन्नाद् योगसिद्धिर्न सिद्धिरित्युपरिष्टादर्थकल्पनाऽन्यथा कृता। तथा 'इतरहानेन विना' अत्र च 'इतरशब्देन' विपर्ययो गृहीतो नहि विपर्ययोऽनन्तरो य इतरशब्देन लक्ष्येत। अन्यच्च योगदर्शनप्रतिपादितानां मन्त्रादिसम्भूतानां सिद्धीनां मण्डनं सांख्ये कृतम् "योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः" ( सांख्य० ५।१२६ ) अत्र मन्त्रादिजाः सिद्धयः सम्पोषिताः। तस्मादयुक्तं व्याख्यानं तस्य ॥४५॥

व्यक्तिसृष्टेर्भेदप्रयोजने उच्येते--

देवादिप्रभेदा + ।

आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥४६-४७॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति--

( तत्कृते ) पुरुषकृते-पुरुषार्था या खलु ( आब्रह्मस्तम्बपर्यन्तं दैवादिप्रभेदा सृष्टिः ) ब्रह्माणमारभ्य ब्रह्मणः शरीरमारभ्य स्थावरपर्यन्ता दैवादिप्रभेदयुक्ता दैवमनुष्यतिर्यक्स्थावरभेदयुक्ता सृष्टिरस्ति सा (आविवेकात्) विवेकपर्यन्तं प्रवर्तते, यावत् पुरुषस्य विवेको न जायेत तावत् प्रवर्तते। तत्र तत्र योनिषु शरीरधारणाय तथा भोगाय चान्ते विवेकान्मोक्षायापि ॥४६-४७॥

सा च तथाविधभेदयुक्ता सृष्टिः--

ऊर्ध्वं सत्त्वविशाला ॥४८॥

( ऊर्ध्वं सत्त्वविशाला ) दैवसृष्टिः सत्त्वबहुला भवति ॥४८॥

तमोविशाला मूलतः ॥४९॥

( मूलतः-तमोविशाला ) अधोभूता तिर्यकसृष्टिः स्थावरसृष्टिश्च तमोबहुला भवति ॥४९॥

मध्ये रजोविशाला ॥५०॥

( मध्ये रजोविशाला ) उभययोर्मध्ये भवा मनुष्यसृष्टिस्तु रजोबहुला भवति ॥५०॥

+ "...प्रभेदाः' पाठो अनिरुद्धस्य। '... प्रभेदा' विज्ञानभिक्षोः।

सैषा प्रकृतेर्विविधा सृष्टिः कैमर्थिकी भवति । अत्रोच्यते--

कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥५१॥

( प्रधानचेष्टा ) सैषा विविधसृष्टिरूपा प्रधानचेष्टा प्रकृतिपरिणतिः प्रकृतेः क्रिया ( कर्मवैचित्र्यात् ) जीवात्कर्मवैविध्याद् भवति ( गर्भदासवत् ) यथा गर्भदासः स्वभावतो दासः स्वाम्यर्थं विविधं चेष्टते तथैव प्रकृतिरपि स्वभावतः शाश्वतिकी पुरुषार्था सती तदर्थं विविधं चेष्टते सृष्टिरूपं गृह्णाना ॥५१॥

ननु भवतूत्कृष्टयोनौ सत्त्वविशालायां कृतकृत्यता किं पुनर्मोक्षेण । अत्रोच्यते--

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥५२॥

( उत्तरोत्तरयोनियोगात् ) उत्तरोत्तरयोनिसम्बन्धात् सत्त्वप्रधानाद् भवेदुत्कृष्टता परन्तु (तत्र-अपि-आवृत्तिः) तत्रापि न स्थिरत्ता किन्त्वावृत्तिः पुनर्जन्म ततोऽपि भवति, तस्मात् (हेयः) सोऽप्युत्तरोत्तरयोनिसम्बन्धोऽपि त्याज्यः ॥५२॥

अथ च तत्रोत्कृष्टतमयोनौ--

समानं जरामरणादिजं दुःखम् ॥५३॥

( जरामरणादिजं दुःखं समानम् ) अधोयोनिमारभ्योत्तरयोनिपर्यन्तं जरामरणजन्मभवं दुःखं समानमेव भवति । तस्मान्न कृतकृत्यताऽत्युत्कृष्टयोनावपि ॥५३॥

ननु भवतूत्कृष्टयोनिं प्राप्यापि ततः पुनरावृत्तिः कार्यत्वान्नहि कार्यशरणं स्थायि भवति किन्तु कार्याणां कारणे प्रकृतौ लयात्तु न स्यात् पुनरावृत्तिरिति कारणलयात् कृतकृत्यता भवेन्मातुरुत्सङ्गप्राप्तिरिवेत्याकांक्षायामुच्यते--

न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥५४॥

(कारणलयात् कृतकृत्यता न) कारणलयात् खलु न कृतकृत्यता पुनरावृत्तेरभावः ( मग्नवत्-उत्थानात् ) जलाशये मग्नस्यान्तर्गतस्य यथा पुनरुत्थानं भवति तथैव प्रकृतौ लीनस्याप्युत्थानेन भवितव्यम् ॥५४॥

कुत उत्थानमित्यत्र हेतुः--

अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥५५॥

(अकार्यत्वे-अपि तद्योगः) प्रकृतेरकार्यत्वेऽपि, प्रकृतिर्नहि कार्यं किन्तु कारणमस्ति तथापि तस्या अकार्यत्वेऽपि कार्यत्वयोगः कार्ये महदादि-भूतभौतिकान्ते परिणमनं परिणामस्वभावोऽस्ति (पारवश्यात्) परव-शवर्तित्वात् पुनः कार्यरूपे परिणता भविष्यति हि, यः खलु परस्तां कार्ये परिणमयिष्यति तस्मात् कारणस्य कार्यरूपपरिणामधर्मवत्त्वात् कार्यरूपे पुनः पुनः प्रवर्तनात् पुनरुत्थानं भवत्येव न कारणलये कृतकृत्यता ॥५५॥

यद्वशा प्रकृतिः कथम्भूतः स पर इत्याकांक्षायामुच्यते—

स हि सर्ववित् सर्वकर्ता ॥५६॥

(सः हि) स पर एव यः प्रकृतिं कार्ये परिणमयति खल्वस्ति (सर्ववित् सर्वकर्ता) सर्वज्ञः सर्वकर्ता च पुरुषविशेषः ॥५६॥

अथ च—

ईदृशेश्वरसिद्धिः सिद्धा ॥५७॥

(ईदृशेश्वरसिद्धिः सिद्धा) ईदृशस्य सर्वज्ञस्य सर्वकर्तुरीश्वरस्य सिद्धिः सत्ता सिद्धा नित्याऽबाध्याऽनिवार्या न निवार्या, यत्सिद्धये योगिनाम-बाह्यप्रत्यक्षं प्रथमाध्यायेऽस्माभिः सांख्यैः प्रदर्शितं तथाभूतेन योगिनाम-बाह्यप्रत्यक्षेण श्रुत्या च सिद्धिः सिद्धा नित्याऽनिवार्याऽस्ति "त्वमेव प्रत्यक्षं ब्रह्मासि" (तै० उ० १।१) "स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः।" (श्वेता० ६।१६) ॥५७॥

प्रकृत्याः सृष्टिपरिणामे परप्रयोजनमिति विस्तरेणोच्यते--

प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥५८॥

(प्रधानसृष्टिः परार्थम्) प्रधानस्य प्रकृतेः सृष्टिः परार्था पुरुषार्था। कुतः (स्वतः-अपि-अभोक्तृत्वात्) अपिरत्र हेत्वर्थः। यतः प्रधानं स्वतो न भोक्तृ तस्मात् तस्याभोक्तृत्वात् तत्सृष्टिः परार्था। तत्र दृष्टान्तमाह (उष्ट्रकुङ्कुमवहनवत्) यथा ह्युष्ट्रस्य कुङ्कुमवहनं परार्थं भवति तस्याभोक्तृत्वात्, न ह्युष्ट्रः कुङ्कुमं भुङ्क्ते परन्तु वहति तर्हि तस्य तद्

वहनं परार्थमेव तथैव प्रधानस्य सृष्टिरस्वार्था सती परार्थाऽस्ति ॥५८॥

भवतु प्रधानस्य सृष्टिः परार्था तस्याभाक्तृत्वात् परन्तु तदचेतनं सत् कथं परस्यार्थं साधयतीत्याकांक्षायामुच्यते--

अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥५९॥

(प्रधानस्य-अचेतनत्वे-अपि) प्रधानस्याचेतनत्वे सत्यपि (क्षीरवत्-चेष्टितम्) यथा क्षीरस्याचेतनस्यापि गवि-गोऽस्त्रीनं प्रणयनं वत्सार्थं भवति तथैव प्रधानस्यापि ब्रह्मणि ब्रह्माधीनं प्रणयनं महत्तत्त्वादिरूपेण परार्थं जीवात्मार्थम् ॥५९॥

अत्रैवान्यो दृष्टान्तो दीयते—

कर्मवत् कृष्टे (दृष्टे?÷) र्वा कालादेः ॥६०॥

(कृष्टेः कर्मवत्-वा) अथवा कृष्टेः कर्मवत् कृषेः कर्मवत्-कृषि-कर्मवत् तद्यथा कृषिकर्मणि "तत्र तस्येव" (अष्टा० ५।१।११६) सप्तम्यां वत्। उप्तं बीजं वृक्षभावाय चेष्टते (कालादेः) कालादिवशात् कालवशात् कृषीवलस्य प्रयत्नवशाच्च तथैव प्रधानमपि सृष्टिकर्मणि सृष्टिभावाय चेष्टते कालादिवशात् कालवशादीश्वरप्रेरणाच्च ॥६०॥

कथं हि प्रकृतिर्विचारशून्या सती काले--ईश्वरप्रेरणाच्चेष्टेतेत्याकांक्षायामुच्यते—

स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ॥६१॥

(अनभिसन्धानात्--चेष्टितं स्वभावात् भृत्यवत्) प्रधानस्य चेष्टा खल्वविचाराद् भवति स्वभावात् तस्य चेष्टनस्वभाववत्त्वाद् भृत्यवत्, यथा भृत्यस्य चेष्टा विचारमन्तरेण विवेचनेन विना स्वभावाद् भवति, स्वाम्यर्थं चेष्टनं तस्य स्वभावः स्वाभाविको गुणः। अत्र "तथैव प्रकृतेश्चेष्टितं संस्कारादेव" (विज्ञानभिक्षुः) इति जडायां प्रकृतौ संस्कारकथनं नितान्तमसङ्गतम् ॥६१॥

÷ अनिरुद्धवृत्त्याऽत्र सूत्रे 'कृष्टेः' पाठो लक्ष्यते, "यथा कृषीवलेन कृतं कर्म धान्यारोपणादि कालादेव फलति" (अनिरुद्धवृत्तिः) 'दृष्टेः' इति पदं तु निरर्थमेव, अस्यार्थासाङ्गत्य विज्ञानभिक्षुभाष्येऽपि विद्यते "कल्पनाया दृष्टानुसारित्वात्" (विज्ञानभिक्षुभाष्यम्) नह्यत्र कल्पनातः साधनं विद्यते यदि ह्यत्र 'दृष्टेः' पदं स्यात् तर्हि पूर्वस्मिन् सूत्रे तथोत्तरस्मिंश्च सूत्रे पदेनैतेन भवितव्यम्, अर्थासङ्गातिस्तु सर्वत्रापि।

प्रकृतिचेष्टने हेत्वन्तरमाह—

कर्माकृष्टेर्वाऽप्यनादितः ॥६२॥

( अनादितः कर्माकृष्टेः–अपि वा ) अनादितः प्रवाहेणानादितः कर्मभिराकर्षणादपि वा प्रकृतिश्चेष्टते सृष्टिरूपतया परिणमते। अनादिकालात् कर्मभिराकृष्यते हि सा सृष्टिभावाय तस्याः परतन्त्रत्वात् परार्थत्वाच्च बलादाकृष्यते हि सा सृष्टिभावाय तस्मात् प्रकृतिः सृष्टिरूपाय चेष्टत इति यौक्तिकमेतत् ॥६२॥

यद्यनादितः कर्मभिराकर्षणात् प्रकृतेः सृष्टिस्तर्हि न मुक्तिः स्यात्। अत्रोच्यते—

विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥६३॥

( विविक्तबोधात् ) प्राप्तविवेकस्य पुरुषस्य बोधात् ( प्रधानस्य सृष्टिनिवृत्तिः ) प्रकृतेः सृष्टिनिवृत्तिः सृष्टिसमाप्तिर्भवति ( सूदवत् पाके ) यथा पाके सम्पन्ने सति सूदो निवर्तते, इत्थं सृष्टितः प्रकृतिर्निवर्तते ॥६३॥

अथवा—

इतर इतरज्जहाति* तद्दोषात् ॥६४॥

( इतरः–इतरत्–जहाति ) प्रधानादितरः पुरुषः खल्वितरत् स्वस्मादितरद् भिन्नं प्रधानं त्यजति ( तद्दोषात् ) तस्य प्रधानस्य दोषदर्शनात् ततः प्रधानान्निवर्तते। इति तु प्रधानात् पुरुषस्य विमुक्तिः ॥६४॥

एवम्—

द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥६५॥

(द्वयोः–एकतरस्य वा-औदासीन्यम्-अपवर्गः) वाकारोऽत्र चार्थः क्रमबोधने, अर्थाद् द्वयोः–औदासीन्यम्, एकतरस्य–अपवर्गः। पूर्वोक्तसूत्रद्वयेन द्वयोः प्रकृतिपुरुषयोर्भवत्यौदासीन्यं परन्तु तत्रौदासीन्ये सति किलापवर्गो मोक्षस्तु खल्वेकतरस्य पुरुषस्य भवतीति सिद्धान्तः। इदं सूत्रमनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च न सम्यग्व्याख्यातम् ॥६५॥

---

* 'इतर इतरज्जहाति' इति पाठोऽनिरुद्धवृत्तेः साधुरस्ति, उत्तरसूत्रेणसहोभयौदासीन्यसङ्गतेः। 'इतर इतरवत्' विज्ञानभिक्षुपाठेत्वर्थस्य क्लिष्टकल्पना।

कुतः पुरुषस्यापवर्गो भवति न प्रकृतेः, इत्याकांक्षायामुच्यते—

अन्यसृष्ट्युपरागेऽपि न विरज्यतेऽप्रबुद्धरज्जुतत्त्वस्येवोरगः ॥६६॥

(अन्यसृष्ट्युपरागे-अपि) अपिरत्र हेतुप्रदर्शनार्थः । यद्यपि प्रकृतिर्जातविवेकं प्रति सृष्टितो निवर्तते तदा भवति ह्युदासीना परन्तु योऽन्योऽविवेकयुक्तस्तस्मै सृष्टिविषयकोपरागस्तु तस्याः खल्वस्ति हि, तस्मादविवेकयुक्तात् (न विरज्यते) सा न विरज्यते-सृष्टितो नापवृज्यते, न तस्या अपवर्गो मोक्ष इत्यर्थः । कथमिव । उच्यते (अप्रबुद्धरज्जुतत्त्वस्य-इव-उरगः) उरगः-सर्पः-रज्जुसर्पः-रज्ज्वां सर्पभ्रमो यथाऽज्ञातरज्जुस्वरूपस्य पुरुषस्य न निवर्तते, एवं ह्यजातविवेकं प्रति प्रकृतिः सृष्टिरचनातो न विरज्यते, विमोक्षस्तु जातविवेकस्यैव भवति । तस्मात् पुरुषस्यैव मोक्षे सिद्धान्तः ॥६६॥

अपरञ्च—

कर्मनिमित्तयोगाच्च ॥६७॥

(कर्मनिमित्तयोगात्-च) अथ च प्रकृति र्न विरज्यतेऽत्रायमपि हेतुरन्यो यत् कर्मनिमित्तः खलु योगः सम्बन्धः प्रकृत्या अस्ति, यस्य हि कर्मविशिष्टं तस्य फलभोगाय प्रकृतियोगेन भवितव्यमेव, तेन सह प्रकृति र्युङ्क्ते हि "कर्माकृष्टेर्वाप्यनादितः" (सांख्य० ३।६२) कर्मभिस्तस्या आकृष्टत्वाच्च । तस्मात् प्रकृतेर्नापवर्गः किन्तु पुरुषस्यैव भवति ॥६७॥

प्रकृतिः परार्था, न हि स्वार्था पुनः स्वार्थहीना निरपेक्षा सती प्रकृतिः कमपि पुरुषं प्रति कथं प्रवर्तते तदेतदन्यया युक्त्या प्रदर्श्यते—

नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥६८॥

(नैरपेक्ष्ये-अपि) प्रकृतेर्निरपेक्षत्वेऽपि न केनापि सह प्रकृतेर्विशिष्टा सम्बन्धापेक्षा तस्याः समानभावेन परार्थत्वात् । तथापि (प्रकृत्युपकारे) सृष्टिरूपत्वेन प्रकृतिर्यं कमप्युपकरोति यं कमपि पुरुषं प्रति प्रवर्तते तत्र (अविवेकः-निमित्तम्) अविवेकस्तस्य पुरुषस्य निमित्तमस्ति ॥६८॥

---

अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चोभयत्र "विरज्यते प्रबुद्ध" पाठः परन्तु सन्धिमवलम्ब्य वास्तविकपाठो मूलशैल्या "अप्रबुद्ध"

पुनश्च—

नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यत्वात् ॥६९॥

(प्रवृत्तस्य-अपि) अविवेकिनं पुरुषं प्रति प्रवृत्तस्यापि प्रधानस्य (चारितार्थ्यात्–निवृत्तिः) निवृत्तिर्भवति चरितार्थत्वात् समाप्तप्रयोजनत्वात् स्वरूपप्रदर्शनेन कृतकार्यत्वात् ( नर्तकीवत् ) यथा नर्तकी पारिषद्यान् प्रति नृत्यप्रदर्शनाय प्रवृत्ताऽपि समाप्तनृत्यकृत्या नृत्येन स्वरूपं प्रदर्शितवती सती निवर्तते ॥६९॥

अथ च तन्निवर्तनमपरदृष्टान्तेन पोष्यते--

दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥७०॥

(दोषबोधे–अपि) अपिशब्दो हेत्वन्तरे दृष्टान्तान्तरे च। प्रकृतिनिवर्तनेऽपरोऽयमपि हेतुर्दृष्टान्तश्च यत् खलु दोषबोधे–पुरुषेण प्रधानस्य दोषे ज्ञाते–परिणामित्वपुनर्जन्मनिमित्तत्वदुःखरूपत्वादिके दोषे ज्ञाते सति (प्रधानस्य उपसर्पणं न) प्रकृतेर्ज्ञातदोषं पुरुषं प्रति नोपसर्पणमुपगमनं भवति, न हि तदा प्रकृतिस्तत्समीपमुतिष्ठते किन्तु ततो निवर्तते हि। तत्र दृष्टान्तः ( कुलवधूवत् ) यथा कुलवधू प्रकटितदोषा पुनः पुरुषं प्रति नोपसर्पति किन्तु सङ्कुचति स्वात्मानं सङ्कोचयति निवर्तते हि ततस्तथैव प्रकृतिर्ज्ञातदोषाय सङ्कुचति स्वात्मानं न प्रकटयति ततोऽपसरति हि। उक्तं यथा नारदीये "सविकाराऽपि मौढ्येन चिरं भुक्त्वा गुणात्मना। प्रकृतिर्ज्ञातदोषेयं लज्जयैव निवर्तते" ॥७०॥

यदि प्रकृतिरेव ज्ञातदोषाज्जातविवेकान्निवर्ततेऽज्ञातदोषमजातविवेकं प्रति च प्रवर्तते तर्हि पुरुषे कथं व्यपदिश्यते बन्धो बन्धाच्च मोक्षः। अत्रोच्यते--

नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥७१॥

(पुरुषस्य बन्धमोक्षौ-एकान्ततः-न) पुरुषस्य बन्धः पुनस्ततो मोक्षश्च खल्वेकान्ततस्तत्स्वरूपतो न स्तः। उक्तं यथापूर्वम् "व्यावृत्तोभयरूपः" (सांख्य-१।१६०) यतः (अविवेकात्-ऋते) अविवेकमन्तरेण पुरुषे बन्धस्य पुनस्ततो मोक्षस्यानुपपत्तेः, अविवेकमवलम्ब्य हि पुरुषो बध्यते, अविवेकहानाच्च पुनर्बन्धान्मुच्यते ॥७१॥

अतः--

प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥७२॥

(प्रकृतेः-आञ्जस्यात् ससङ्गत्वात् पशुवत्) पुरुषस्य यो बन्धः पुनस्ततो मोक्षश्च प्रकृतेः पुरुष आञ्जस्यादनायासात् ससङ्गः सहयोगी खल्वस्ति तस्य ससङ्गत्वात् सङ्गित्वात् सहयोगित्वात् पशुवद् बन्धमोक्षौ भवतः, यथा पशुर्यूपसन्निधानाद् रज्ज्वा बध्यते पुनश्च ततो विमुच्यते। अन्यो व्याख्यामार्गः-(प्रकृतेः-आञ्जस्यात् ससङ्गत्वात् पशुवत्) प्रकृतेः खल्वाञ्जस्यादनायासान्निसर्गतः पुरुषेण सह सङ्गोऽस्ति तस्याः परार्थत्वात् पुरुषार्थत्वात् पुरुषसङ्गत्वात् पुरुषसहयोगिनीत्वात् पशुवद् बन्धः पुनर्मोक्षश्चास्ति यथा। पशुः परार्थः, परो जनस्तत्स्वामी तत्पालने बद्धो भवति त्यागे च विमुक्तो भवति तथैव प्रकृत्या सहात्मानं बद्धं तत्सङ्गेन विना मुक्तं चानुभवति ॥७२॥

तत्र बन्धमोक्षयोर्विवेकाविवेकप्रकारः प्रदर्श्यते--

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्
विमोचयत्येकेन रूपेण ॥७३॥

(प्रधानं सप्तभिः-रूपैः-आत्मानं बध्नाति) महत्तत्त्वाहङ्कारपञ्चतन्मात्रैः सप्तभिरवस्थान्तरभूतैर्विकृतिरूपैर्जीवात्मानं बध्नाति यतस्तत एव सान्तःकरणमुभयमिन्द्रियं निष्पद्यते। उच्यते हि "प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियम्" (सांख्य० १।६१) कथमिव (कोशकारवत्) कोशकार इव तन्तुकीट इव यथा तन्तुकीटस्तन्तुभिर्बध्नाति, दृष्टान्तस्यैक एवांशोऽत्र बन्धनमेवाभिप्रेयते न सर्वांशत्वं स्वबन्धनमपि यद्वा प्रकृतेरात्मभूतः पुरुषस्तमात्मभूतं प्रकृतिर्बध्नाति। पुनः (एकेन रूपेण विमोचयति) एकेन रूपेण स्वरूपभूतेन प्रकृतिरूपेण सृष्टिनिर्वर्तनेन विमोचयति। बन्धस्तु खलु पुरुषस्यैव सोऽविवेकात्, विवेकाविवेकौ पुरुषाधिष्ठानकौ, पूर्वस्मिन्नस्मिंश्च सूत्रे प्रकृतेर्बन्धमोक्षकथनमन्यभाष्यकारप्रलपनमेव। बहुभिः सूत्रैः सिध्यति हि पुरुषस्य हि बन्धः स चाविवेकात् सति विवेके मोक्षः ॥७३॥

कथमुच्यते सप्तभिर्महत्तत्त्वाहङ्कारतन्मात्रैर्बन्धः पूर्वं तु खल्वविवेक एव बन्धकारणमुक्तं "तमेव विदित्वाऽतिमृत्युमेति" (यजु० ३१।१८) इतिदृष्टकारणस्य हानिर्भवेदत्रोच्यते--

निमित्तत्वमविवेकस्य न दृष्टहानिः ॥७४॥

( अविवेकस्य निमित्तत्वम् ) तत्र महत्तत्त्वादौ खल्वविवेकस्य निमित्तत्वमस्ति, अविवेकस्तत्र निमित्तम्, अविवेकयुक्तं हि महत्तत्त्वादिभिर्बध्नाति प्रकृतिः (दृष्टहानिः–न ) दृष्टस्य साक्षाद्भूतस्य कारणस्य बन्धकारणस्य न हानिः, यतः साक्षान्निमित्तं तु बन्धस्याविवेक एव, अविवेकनिमित्तादेव पुरुषस्य प्रवृत्तिरतश्च महत्तत्त्वादिसृष्टिः ॥७४॥

अविवेको बन्धस्य निमित्तं तन्निवृत्तिर्विवेकाद्भवति, विवेकसिद्धेः क उपाय इत्याकांक्षायामुच्यते—

तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिः ॥७५॥

( तत्त्वाभ्यासात् ) तत्त्वचिन्तनादात्मपरमात्मचिन्तनात् । कथमित्युच्यते ( न–इति न-इति–इति त्यागात् ) यद् यद् वस्तु केनापि साधनेन मनसाऽपि वाऽनुभूतं भवेत्तेन तन्नेति नेति तत्त्वमात्मतत्त्वं परमात्मतत्त्वमिति त्यागप्रकारात् ( विवेकसिद्धिः ) विवेकस्यात्मनः परमात्मनः स्वात्मनि साक्षात्कारसिद्धिर्भवति । उच्यते यथा "अथात आदेश नेति नेति नह्य तस्मा दति नेत्यन्यत् परमस्ति" ( बृह० २।३।६ ) "स एष आत्मा नेति नेति" (बृह० ३।६। २६) ॥७५॥

सा च विवेकसिद्धिर्न सर्वेषां समानेत्युच्यते—

अधिकारिप्रभेदान्न नियमः ॥७६॥

( अधिकारिप्रभेदात्–न नियमः ) अधिकारिणां विवेकाभ्यासिनां प्रभेदात् सर्वेषां विवेकसिद्धिसमानत्वस्य नियमो नास्ति, न हि सर्वेषां विवेकः समानो भवति यतः सन्ति ह्यधिकारिणो मृदुमध्याधिमात्राः । उक्तं हि योगदर्शने "मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः" ( योग० १।२२ ) ॥७६॥

अतएव—

बाधितानुवृत्तेर्मध्यविवेकतोऽप्युपभोगः ॥७७॥

( मध्यविवेकतः–बाधितानुवृत्तेः–अपि–उपभोगः ) मध्यविवेकाद् बाधिता या खल्वनुवृत्तिरनुरक्तिरनुरागरूपा प्रवृत्तिर्येनाभ्यासिना तस्यापि विवेकाभ्यासिनो भवत्युपभोगस्तात्कालिको यावत्प्रारब्धभोगसमाप्तिः । अधिमात्रविवेकस्य तु सर्वथा भोगाभावो भवति । अथवा (मध्यविवेकतः अपि–उपभोगः–बाधितानुवृत्तेः ) मध्यविवेकतोऽपि भवत्युपभोगो

बाधितानां विवेकाभ्यासान्निवारितानां विषयाणामनुवृत्तेरनुवर्तमानत्वात् तेऽनुवर्तन्ते शरीरमनुवर्तन्ते हि विषया यावच्छरीरं तस्यापि मध्यविवेकिनः, नष्टेन शरीरेण सहैव तेऽपि नश्यन्ति हि ॥७७॥

जीवन्मुक्तश्च ॥७८॥

( जीवन्मुक्तः-च ) जीवन्मुक्तश्च स मध्यविवेकी भवति, तदा च स जीवन्मुक्तोऽभिधीयते "आत्मानं चेद् विजानीयादयस्मीति पुरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" (बृह० ४।४।१२) ॥७८॥

जीवन्मुक्तसिद्धौ युक्तिमाह--

उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥७९॥

( उपदेश्योपदेष्टृत्वात् ) विवेकार्थी खलूपदेश्यस्तस्य विवेकार्थिन उपदेश्यस्य विवेकोपदेष्ट्रा भवितव्यमेव तस्मात् ( तत्सिद्धिः ) तस्य जीवन्मुक्तस्य विवेकसम्पन्नस्य सिद्धिस्तस्यास्तित्वसिद्धिर्भवति ॥७९॥

अत्र खलु--

श्रुतिश्च ॥८०॥

(श्रुतिः-च) अस्मिन् विषये जीवन्मुक्तविषये युक्तिरेवास्तीति न किन्तु श्रुतिश्च चकारात्स्मृतिश्च प्रमाणमस्ति । "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ( मुण्ड० १।२।१२ ) "द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च । जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिगः ।" (मुक्तिको० २।३२) "आत्मकल्पेन वा व्यवतिष्ठते प्रलयं वाधिगच्छति" (योग० व्यासः) "जीवन्नेव विद्वान् हर्षामर्षाभ्यां विमुच्यते" इत्यनिरुद्धः ॥८०॥

लोकदृष्ट्या जीवन्मुक्तस्य सिद्धिः सूच्यते--

इतरथाऽन्धपरम्परा ॥८१॥

( इतरथा ) अन्यथा यद्य तादृशो जीवन्मुक्त उपदेष्टा न भवेत्-तर्हि ( अन्धपरम्परा ) अन्धपरम्पराऽविवेकस्य परम्परा प्रसज्येत नहि कस्यापि विवेको जायेत, तस्माज्जीवन्मुक्तस्य सिद्धिः ॥८१॥

स जीवन्मुक्तो विवेकसम्पन्नोऽपि कथं शरीरं धत्तेऽविवेकत्वं तु शरीराद् विमुच्येत ।

अत्रोच्यते--

चक्रभ्रमणवद् धृतशरीरः ॥८२॥

( चक्रभ्रमणवत्-धृतशरीरः ) यथा कुम्भकारस्य चक्रं दण्डेन भ्रामितं

सत् तस्य भ्रमणनिमित्तभूतदण्डापगमेऽपि चक्रभ्रमणं भवति हि–कञ्चित् कालं भ्रमच्चक्रं दृश्यते ह्यवशिष्टवेगतो यद्वा वेगलेशतः, तथैव स जीवन्मुक्तोऽपि धृतशरीरः सशरीरस्तिष्ठति । उक्तं च "दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे । कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः ॥ "अशुक्लकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति" ( योग० ४।७० व्यास० ) ॥८२॥

तस्मात्—

संस्कारलेशतस्तत्सिद्धिः ॥८३॥

( संस्कारलेशतः–तत्सिद्धिः ) संस्कारलेशतः कृतकर्मभोगरूपविषयाणां संस्कारलेशान् संस्काराभासात् तस्य जीवन्मुक्तस्य शरीरधारणसिद्धिः ॥८३॥

वस्तुतः—

विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात् ॥८४॥

( विवेकात्–निःशेषदुःखनिवृत्तौ ) पूर्णविवेकात् खलु समस्तदुःखनिवृत्तिर्भवति, तदैव ( कृतकृत्यः ) पुरुषः कृतकृत्यो भवति (इतरात्-न) भिन्नात् विवेकभिन्नात् केवलकर्मणो नेत्यर्थः । नेतरात् द्विरुक्तिरध्यायसमाप्त्यर्था ॥८४॥

सांख्यदर्शने समाप्तस्तृतीयोऽध्यायः स्वामिब्रह्ममुनिभाष्योपेतः ।



# चतुर्थोऽध्यायः

राजपुत्रवत् तत्त्वोपदेशात् ॥१॥

(तत्त्वोपदेशात्–राजपुत्रवत्) गतानन्तराध्यायान्तिमसूत्राद् विवेकोऽत्र-सूत्रे लक्ष्यते। स च विवेकस्तत्त्वोपदेशाद् यथार्थोपदेशाज्जायते राजपुत्र-वद् यथाऽनेकेषां राजपुत्राणां राजवंश्यानां जनकादीनां पञ्चशिखप्रभृति-सकाशात् तत्त्वोपदेशग्रहणाज्जातः। ब्राह्मणानामेव परम्परया विवेको जात इति न किन्तु क्षत्रियाणां राज्यसञ्चालनप्रवृत्तानामपि विवेको जात इति तत्त्वोपदेशस्य माहात्म्यं विवेकप्रादुर्भावे ॥१॥

न हि साक्षादुपदेशादेव न च क्षात्रवंशपर्यन्तं हि विवेको जायतेऽपितु—

पिशाचवदन्यार्थोपदेशेऽपि ॥२॥

(अन्यार्थोपदेशे–अपि पिशाचवत्) अन्यार्थे दीयमाने खलूपदेशेऽप्यन्यस्य समीपस्थस्य श्रोतुस्तदुपदेशाद् विवेको जायते पिशाचवत्, यथा-ऽर्जुनाय कृष्णेन दीयमाने ह्युपदेशे पिशाचस्य समीपस्थस्य जाङ्गलिकस्यातिशूद्रस्यापि किरातस्य 'भील' इत्याख्यस्य यथा वा पार्वत्यै शिवेन दीयमाने तथोपदेशे पिशाचस्य समीपस्थस्य पर्वतीयजनस्य शूद्रस्यापि सेवकस्य विवेको जातः ॥२॥

प्रकारद्वयात् साक्षादसाक्षाद्वोपदेशग्रहणाद् विवेको जायत इति तूक्तं परन्तु केषाञ्चित् कदाचित् सकृदुपदेशाज्जायते विवेकः केषाञ्चित् कदाचिन्न तदा तु—

आवृत्तिरसकृदुपदेशात् ॥३॥

(असकृत्–उपदेशात्–आवृत्तिः) पुनःपुनरुपदेशग्रहणादावृत्तिः कार्या पुनः पुनः श्रोतव्य उपदेशः। तद्यथा "भूय एव मा भगवान् विज्ञापयतु" (छान्दो० ६।५।४) श्वेतकेतुरारुणितः पुनः पुनरुपदेशं जग्राह ॥३॥

अथ च कस्यचिद् घटनाप्रभावादपि विवेको जायते—

पितापुत्रवदुभयोर्दृष्टत्वात् ॥४॥

(पितापुत्रवत्–उभयोः–दृष्टत्वात्) पितुर्मृत्युः पुत्रस्य जन्म च यथा

भवति तथा ममापि जन्ममृत्युभ्यां भवितव्यं यतः पितृमृत्योः पुत्रजन्मनश्च दृष्टत्वात्, दृष्टो हि पितुर्मृत्युर्दृष्टं च पुत्रस्य जन्म मया "आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ" तद्यस्मिन् जन्ममरणचक्रयुक्ते संसारे केवलं जन्माथ च मरणमेव न पुरुषार्थ इति मत्वा निर्विण्णो विवेकं लभते ॥४॥

विवेकतो विषयाणां त्यागः कर्तव्य इति दृष्टान्तेनाह--

श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥५॥

( श्येनवत् सुखदुःखी ) श्येनो मांसभक्षकः पक्षी भासस्तेन तुल्यो विषयग्रस्तो जनो भवति सुखी दुःखी च (त्यागवियोगाभ्याम् ) विषयाणां त्यागाद् वियोगाच्च । स्वयमेव विषयत्यागात् सुखी भवति, अन्यथा विषयवियोगाद् दुःखी जायते, यथा श्येनो भासो मांसलोलुपः सामिषो व्योम्नि खलूड्डयमानोऽपरैर्बलवद्भिर्मांसभक्षकैः पक्षिभिरामिषं हर्तुमाक्रान्तस्तन्मांसशकलत्यागेन सुखी भवति नो चेद् बलाद् वियोज्यमानो दुःखी जायतेऽन्यैराहन्यते । उक्तं हि "सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः । तदामिषं परित्यज्य स सुखं समविन्दत ।" तथैव विवेकतो विषयत्यागः श्रेयान् सुखनिमित्तश्च, अन्यथा विषयवियोगस्तु निसर्गतोऽवश्यम्भावी तेन दुःखभाग्भवति । तस्माद् विवेकतो विषयत्यागो विधेयः ॥५॥

हेयस्य त्यागे हि सुखं विवेकिनो भवतीत्यपि दृष्टान्तेनोच्यते--

अहिर्निर्ल्वयिनीवत् ॥६॥

( अहिः-निर्ल्वयिनीवत् ) यथा सर्पो ल्वयिनीं जीर्णां त्वचं त्यक्त्वा सुखी भवति तथैव विवेकी जनो बहुकालोपभुक्तां भुक्तभोगां भोगसृष्टिं विवेकतस्त्यक्त्वा सुखी भवति ॥६॥

भोगसृष्टित्यागे दृष्टान्तान्तरं दीयते--

छिन्नहस्तवद्वा ॥७॥

( वा ) अथवा ( छिन्नहस्तवत् ) त्यजेदित्यन्वयः । यथा कश्चिज्जनोऽहिना दष्टं तद्विषेणाक्रान्तं हस्तं छिन्नं कारयित्वा छिन्नहस्तः सन् सुखं लभते तद्वद् दृष्टदोषां विषतुल्यां भोगसृष्टिं त्यक्त्वा सुखी भवति । भोगाः खलु विषकल्पाः । उच्यते हि "विषस्य विषयाणां च दृश्यते महदन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ।" ॥७॥

त्यक्तस्य त्याजस्य वाऽनुचिन्तनमनिष्टकरमिति वर्ण्यते—

असाधनानुचिन्तनं बन्धाय भरतवत् ॥८॥

( असाधनानुचिन्तनम् ) यद्विवेकज्ञानस्य साधनं नास्ति यद्वाऽनुचितसाधनं तथाभूतस्य त्यक्तस्य त्याज्यस्य वा पदार्थस्यानुचिन्तनं मनसि संस्थापनम् ( बन्धाय भरतवत् ) बन्धाय भवति भरतवत् । यथा भरतेन राजर्षिणा हरिणशावकस्य मनसि स्थापनं कृतं तद्रागात् तस्य बन्धो जातो न विमोक्षभागभूत् सः ॥८॥

विषयानुचिन्तनाभावेऽपि बहुसम्मेलनं नानुष्ठेयमित्युच्यते दृष्टान्तेन—

बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत् ॥९॥

( बहुभिः—योगे विरोधः—रागादिभिः ) बहुभिर्जनैः सह सङ्गे सम्मेलने विरोधः कलहो जायते तेषु रागद्वेषादिभिर्भावैर्वर्तमानैः, वर्तन्ते हि जनेषु रागद्वेषादयस्तस्माद् विरोधः सम्भाव्यते ( कुमारीशङ्खवत् ) यथा कुमारीचरणगताः शङ्खा भूषणविशेषाः परस्परं संघृष्य झणत्कुर्वन्ति भृशं शब्दायन्ते त्रुट्यन्ति च तद्वत् । तस्माद् विवेकिना बहुभिः सम्मेलनं न कार्यम् ॥९॥

अपितु—

द्वाभ्यामपि तथैव ॥१०॥

( द्वाभ्याम्—अपि तथा—एव ) द्वाभ्यां सहयोगे खल्वपि तथैव विरोधदोषो जायेतेति सम्भवः । तस्माद् विवेकिना त्वेकाकिनैव स्थेयम् ॥१०॥

यदि द्वाभ्यामपि सह न वसेत्तदैकाकिना कथं स्थेयमित्याकांक्षायामुच्यते ।

निराशः सुखी पिङ्गलावत् ॥११॥

(निराशः सुखी) विवेकी जन आशां विहाय सुखी भवति (पिङ्गलावत् ) पिङ्गला काचिद् वेश्या तादृशे कालेऽभूद् यदा सदाचारस्य प्राधान्यमासीद् यथा "न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः" (छान्दो० ५।११।५) तदा सा कामुकार्थिनी कामुकान् प्रतीक्षमाणा कमपि कामुकमलभमाना पिङ्गला सर्पणीवोच्छ्वसती महती व्याकुलाऽऽस पुनः सा महात्मन उपदेशात् त्यक्ताशा सुखिनी जाता । पिङ्गला नाम स्याद् योगवशात् कामुकानलब्ध्वा सा

पिङ्गला सर्पणी स्फुरन्तीव जाता बभूव । अतएव विवेकाद् विषयवासना त्याज्येति गम्यते, वासनया चित्तप्रसादोऽपिहितो भवति तदपगमात् स स्फुटीभवति । उक्तं यथा "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः शोडशीं कलाम् ॥" ( योग० २।४२ व्यासः ) ॥११॥

अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥१२॥

(अनारम्भे-अपि) विवेकी जनः स्वगृहादिकस्यानुपार्जनेऽपि (परगृहे-सुखी सर्पवत् ) अन्यस्य गृहे सुखी भवति सर्पवत्, यथाः सर्पः स्वगृहं नारभते न निर्मीति प्रत्युत सुखी भवति गृहनिर्माणभारचिन्तया रहितश्च भवति तथैव विवेकी जनो गृहाद्युपार्जनचिन्तया रहितः सुखी भवति गृहस्य ममत्वाच्च विमुक्तस्तिष्ठति ॥१२॥

नन्वेवं यत्र तत्र विचरन् विवेकी जनः किं कुर्यादित्युच्यते—

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥१३॥

(बहुशास्त्रगुरूपासने-अपि) अनेकशास्त्राणामध्ययनात् तथा गुरूणां संसेवनात् समाश्रयात् सत्सङ्गादपि ( सारादानं षट्पदवत् ) भ्रमर इव सारस्य ग्रहणं कुर्याद् विवेकदार्ढ्याय, यथा भ्रमरः पुष्पेभ्यः सारं रसं गृह्णाति ॥१३॥

सारं गृहीत्वा स्यादेकाग्रमनाः, यतः—

इषुकारवन्नैकचित्तस्य समाधिहानिः ॥१४॥

(इषुकारवत्–एकचित्तस्य समाधिहानिः–न) इषुकार इषुप्रक्षेप्ता–इषूपयोगकर्ता "कृ विक्षेपे" (तुदा०) "कृञ् करणे" (तनादि०) "कृञ्... निक्षेपणे चापि वर्तते कटे कुरु घटे कुरु, अश्मानभितः कुरु स्थापयेति गम्यते" (महाभाष्य व्या० १।३।१) अनेन इषुकार इषुप्रक्षेप्ता । तथा "कन्याया दक्षिणत उदङ्मुखो मन्त्रकारः" (वाराहगृह्यसूत्रम् । ख० १३) मन्त्रकारो मन्त्रप्रयोक्ता ब्रह्मा तथैवात्र इषुकारः–इषुप्रयोगकर्ता । तस्येषुप्रक्षेप्तुरिषुप्रयोगकर्तुर्यथैकचित्तस्य स्थितिर्भवति तदानीं न स लक्ष्यं विहायान्यमना भवति नान्यान् पश्यति तथैव विवेकिन एकचित्तस्य सतः समाधिहानिर्न भवति ॥१४॥

पुनश्च स विवेकी मुमुक्षुर्व्रतनियमपरायणो भवेत्। यतः--

व्रतनियमलङ्घनादानर्थक्यं+ लोकवत् ॥१५॥

(व्रतनियमलङ्घनात्) व्रतानि सन्ति खल्वहिंसादयः पञ्च नियमाश्च शौचादयः पञ्च तेषां लङ्घनादुल्लङ्घनात् त्यागात् (अनार्थक्यं लोकवत्) आनर्थक्यमनर्थकत्वं प्रसज्यते लोकवत्, यथा लोके व्रतनियमभङ्गी खल्वनर्थं भजते लोकव्यवहाराच्च्यवते न सोऽर्थफलभाग्भवति तथैव मुमुक्षुर्व्रतनियमभङ्गादनर्थं भजते स्वपुरुशार्थाच्च्यवते ॥१५॥

न केवलं व्रतनियमानां लङ्घनादेवानर्थं भजते किन्तु--

तद्विस्मरणेऽपि भेकीवत् ॥१६॥

(तद्विस्मरणे-अपि भेकीवत्) व्रतनियमानां विस्मरणेऽपि भेकीवदनर्थभाग्भवति। भेकानां मण्डूकानां वर्षान्तं यावद्वर्षं नैसर्गिकं व्रतं मौनं नियमश्च गुप्तनिवासः। वर्षासु हि भाषणं बहिरागमनं च तेषां भवति न पूर्वम्। उक्तं हि वेदे "संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः। वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः॥" (ऋ० ७।१०३।१) किन्तु तथाभूतं व्रतं नियमं च विस्मृत्य काचिद् भेकी गुप्तस्थानाद् बहिरागताऽथ चोच्चैर्बभाषे, तस्याः शब्दं श्रुत्वा बहिरागतां च दृष्ट्वा तां सर्पो भक्षयामास। तथैव यो विवेकी मुमुक्षुः स्वव्रतनियमान् विस्मरति सोऽपि मनाग्विनष्टो भवति ॥१६॥

पञ्चदशषोडशसूत्रयोरर्थः पञ्चदशसूत्रेऽनिरुद्धपाठमवलम्ब्य त्वेषोऽस्ति विज्ञानभिक्षुभाष्यानुसारतः पाठमाश्रित्य तयोर्व्याख्यामार्गः प्रदर्श्यते--

विवेकिना मुमुक्षुणा कृतनियमपरायणेन भवितव्यमित्युच्यते--

कृतनियमलङ्घनादानर्थक्यं× लोकवत् ॥१५॥

(कृतनियमलङ्घनात्) यः खलु विवेकिने मुमुक्षवे शास्त्रे नियमो निर्दिष्टः सोऽवश्यं धारणीयः पालनीयश्च। येन हि स नियमः कृतो धारितो यदि स लङ्घयेत् तं तर्हि तस्य कृतस्य नियमस्य लङ्घनादुल्लङ्घनात् (आनर्थक्यं लोकवत्) आनर्थक्यं व्रजेत् स लोकवत्, यथा लोके यः स्वास्थ्यलाभाय कृतं नियममुल्लङ्घयेदपथ्यमाचरेत् सोऽनर्थं भजते स्वास्थ्या-

+'व्रतनियमलङ्घनात' अनिरुद्धपपाठः।

×'कृतनियमलङ्घनात्' पाठो विज्ञानभिक्षोः।

च्च्यवते तथैव विवेकी स्वानुकूलं कृतं नियममुल्लङ्घ्यानर्थं व्रजेन्मोक्ष-मार्गाच्च्यवेत ॥१५॥

न केवलं कृतनियमलङ्घनादनर्थं भजते किन्तु--

तद्विस्मरणेऽपि भेकीवत् ॥१६॥

( तद्विस्मरणे-अपि भेकीवत् ) 'भेकी' इति नाम गुणवशात् कस्याश्चिद् राजकुमार्याः संज्ञाभार्याः, सा खलु भेकीवज्जले चिराय निमज्जन-व्यसना बभूव तस्मात्सा गुणानुसारिणीं भेकीं संज्ञामाप्तवाती । सा च राजकुमारी सुकुमारी बहुसौन्दर्यापन्ना मातापितृभ्यां रक्षिकाभिश्च जले निमज्जनभयादतिप्रयत्नेन रक्षिता पुनस्तस्या विवाहो योग्येन राजकुमारेण सह तन्मातापितृभ्यां कृतः, तस्याश्च जले निमज्जनव्यसनं ज्ञापितं जलाद् भयाय च सूचितो राजकुमारो यदेषा क्वचिज्जले न प्रवेश्या । स च राजकुमारस्तद्विषये कृतनियमो जातः पुनः कदाचित् क्वचिन्मृगयार्थं सह तां नीतवान् तत्र च सा बहुभ्रमणश्रान्त्या ग्रीष्मतापमसोढ्वा व्याकुलीभूत्वा राजकुमारं जलपानाय जलस्नानाय च जलाशयं पृष्टवती, राजकुमारः शैघ्र्यात् तं कृतनियमं विस्मृत्य दर्शितवान् महान्तं जलाशयं सा च सद्यस्तत्र वेगेन प्रविश्य निममज्ज । राजकुमारश्च चिरमन्विष्य तां न लेभे पुनश्च सोऽपि गहने शोकसागरे निममज्ज न शान्तिमवाप्तवान् । अत्र व्याख्याने 'भेकीवत्' वतुप्रत्ययः सप्तम्याम् "तत्र तस्येव" ( अष्टा० ५।१।११६) । एवं यः कश्चिद् विवेकी मुमुक्षुः स्वकृतनियमं विस्मरेत् सोऽवश्यं शोकसागरे निपतेत् ॥१६॥

जातविवेकस्य चर्याविधानानन्तरमधुना विवेकप्राप्तये श्रवणादिकं निर्दिश्यते--

नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥१७॥

(उपदेशश्रवणे-अपि कृतकृत्यता न) यद्यप्युपदेशस्य श्रवणमावश्यकं न हि श्रवणमन्तरेण कस्यचिज्ज्ञानं भवति, परन्तु केवलं श्रवणमेव पर्याप्तमिति न, यतो हि श्रवणे सत्यपि न कृतकृत्यता-साफल्यं न सम्भवति, (परामर्शात्-ऋते) परामर्शोऽत्र मनननिदिध्यासनार्थः । मनननिदिध्यासनाभ्यां विना, श्रवणानन्तरं मनननिदिध्यासनाभ्यां भवितव्यमेव न तद्विना कृतकृत्यता ( विरोचनवत् ) यथा प्रजापतिसकाशाच्छ्रवणमिन्द्रविरोचनाभ्यां कृतं परन्तु विरोचनेन श्रवणानन्तरं मनननिदिध्यासने न कृते तस्मात् तस्य कृतकृत्यता न जाता ॥१७॥

किन्तु--

दृष्टस्तयोरिन्द्रस्य ॥१८॥

(तयोः-इन्द्रस्य दृष्टः) इन्द्रविरोचनयोरिन्द्रस्य परामर्शो मनननिदिध्यासनरूपो दृष्टः, तस्मात् कृतकृत्यता जाता ॥१८॥

अथ च श्रवणादपि ज्ञानसिद्धिर्यथाविधानादेव भवति न विधिहीनाच्छ्रवणमात्रादित्युच्यते--

प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धि-
र्बहुकालात् तद्वत् ॥१९॥

(प्रणतिब्रह्मचर्योपसर्पणानि बहुकालात् कृत्वा) प्रणतिं गुरौ नम्रता नम्रभावानुष्ठानं ब्रह्मचर्यं संयमं तथोपसर्पणं गुरोरुपसेवनं स्वयमेव श्रद्धया सेवां बहुकालं कृत्वा (सिद्धिः-तद्वत्) ज्ञानसिद्धिर्ज्ञानलाभो भवति तद्वदिन्द्रवत्, यथेन्द्रः प्रणत्यादीन् चिरं सम्यगनुष्ठाय ज्ञानलाभं प्राप्तवान् गुरुभक्तितो ज्ञानप्राप्तिश्च श्रुतौ प्रदर्श्यतेऽपि "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" (श्वेता० ६।६३) ॥१९॥

किं प्रणत्यादिना श्रवणं बहुकालमनिवार्यमित्याकांक्षायामुच्यते--

न कालनियमो वामदेववत् ॥२०॥

(कालनियमः-न वामदेववत्) विवेकसिद्धौ कालनियमो नास्ति, कस्यचित् क्षिप्रं कस्यचिच्चिरेण कस्यचिदिहजन्मनि कस्यचिदपरजन्मनि विवेकसिद्धिर्भवति वामदेववत्, वामदेवस्य यथेहजन्मनि विवेकसिद्धिर्जाता प्राग्जन्मसाधनानुष्ठानात्। उक्तं यथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं मनुरभवमहं सूर्यश्च" (बृह० १।४।१०) ॥२०॥

वस्तुतस्तु--

अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपासकानामिव ॥२१॥

(पारम्पर्येण-अध्यस्तरूपोपासनात्) श्रवणमनननिदिध्यासनसाक्षात्कारपरम्पराक्रमेण खल्वध्यस्तस्य गुरुणा शास्त्रेण वाऽधिक्षिप्तस्य प्रस्तावितस्य* रूपस्य परमात्मस्वरूपस्योपासनाद् विवेकसिद्धिर्भवति तत्र

*अत्र 'अध्यस्तम्' अधि-असु क्षेपणे (दिवा०) 'गुरुणा यदध्यस्तम् (अनिरुद्धः) "अध्यस्तोपदिष्टस्य" (महादेववेदान्ती सांख्यटीकायाम्)।

कालोऽपेद्यते हि ( यज्ञोपासकानाम्–इव ) यथा यज्ञकर्मानुष्ठातृणां पारम्पर्येण यज्ञविधीनामनुक्रमेणानुष्ठानादभ्युदयसिद्धिर्भवति तत्र कालोऽप्यपेद्यते हि ॥२१॥

यद्येवं पारम्पर्येण विवेकः सिध्यति तर्हि यज्ञोपासकानामपि पारम्पर्येणोत्कृष्टलोकसिद्धिर्भवति तदा यज्ञ एवोपास्यः । अत्रोच्यते--

इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥२२॥

( इतरलाभे–अपि–आवृत्तिः ) यज्ञानुष्ठानेन खलूत्कृष्टलोकप्राप्तावपि भवति हि तत आवृत्तिः ( पञ्चाग्नियोगतः–जन्मश्रुतेः ) पञ्चाग्नियोगतः पुनर्जन्म श्रूयते "असौ वाव लोको गौतमाग्निः····योषा वाव गौतमाग्निः···तस्या आहुतेर्गर्भः सम्भवति" (छान्दो० ५।४।१–८।२) देवयानपथेत्युक्तम् । तस्माद् यज्ञानुष्ठानं न विवेकसाधनं यद्वा मोक्षसाधनम् । अतोविवेकिना तन्नोपादेयम् ॥२२॥

किन्तु—

✓ विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥२३॥

( विरक्तस्य ) विवेकप्राप्तस्य तु ( हेयहानम्–उपादेयोपादानम् ) हेयस्य हानं तथोपादेयस्योपादानं कार्यम् ( हंसक्षीरवत् ) यथा हंसो जलमिश्रितदुग्धाज्जलं त्याज्यं त्यजति तथोपादेयं दुग्धमुपादत्ते तद्वद्विरक्तो विवेकी यदावृत्तिनिमित्तं तत् त्यजति यद् विमोक्षसाधनं तदुपादत्ते ॥२३॥

यतः—

लब्धातिशययोगात् तद्वत् ॥२४॥

( लब्धातिशययोगात् ) विरक्तो हि विवेके लब्धातिशययोगो भवति तेन विवेकेऽतिशयो योगो युक्तिर्योग्यता प्राप्ता तस्मिन् विरक्ते विवेकस्य विवेचनस्य पृथक् पृथग्वस्तुज्ञानस्य हेयोपादेययोः पृथक् पृथक् करणस्य योग्यता भवति ( तद्वत् ) हंसवत् हंसस्येव ॥२४॥

अविरक्तस्य तु--

✓ न कामचारित्वं रागोपहते शुकवत् ॥२५॥

( रागोपहते ) अविरक्तः खलु रागेण परिवृतो रागस्य वशीभूतः, तस्य रागोपहतत्वे सति ( कामचारित्वं न शुकवत् ) कामचारित्वं हेयस्य हानायोपादेयस्योपादानाय यद्वा हेयं मार्गं त्युक्तुमुपादेयं मार्गं चोपादातुं

यथेष्टसञ्चारित्वं स्वातन्त्र्यं नास्ति शुकवद् रागवशीभूतत्वात् । यथा शुकः पक्षी पञ्जरोपहतः पञ्जरेण परिवृतः सन् यथेष्टकामचारी न भवति तस्य यथेच्छगमने स्वातन्त्र्यं न भवति तद्वत् पुरुषोऽपि रागरूपे पञ्जरे बद्धो न कामचारी भवति ॥२५॥

कथं तर्हि रागे रागरूपे पञ्जरे बद्ध इत्युच्यते---

गुणयोगाद् बद्धः + शुकवत् ॥२६॥

( शुकवत्-गुणयोगात्-बद्धः ) यथा शुकः पक्षी मधुरभाषणगुण-वशाद् बद्धो लौहपञ्जरे तथैव पुरुषो भोक्तृत्वगुणवशाद् रागरूपपञ्जरे बद्धः ॥२६॥

परन्तु--

न भोगाद्रागशान्तिर्मुनिवत् ॥२७॥

( भोगात्-रागशान्तिः-न ) भोगात् खलु रागशान्तिर्न कदापि भवति ( मुनिवत् ) यथा सौभरेर्मुनेर्भोगान्न रागशान्तिर्जाता । तदुक्तं सौभरिणा "आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाऽद्य । मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसङ्गि" ॥२७॥

तर्हि कस्मादुपायात् स्याद् रागशान्तिरित्युच्यते—

दोषदर्शनादुभयोः ॥२८॥

( उभयोः-दोषदर्शनात् ) उभयोर्भोक्तृभावस्य भोग्यपदार्थस्य च दोष-दर्शनात् । भोक्तृभावस्य पुनःपुनर्जन्म गर्भवासो मरणत्रासो भिन्नभिन्न-योनिप्रवेशश्च तथा भोग्यपदार्थस्य परिणतिर्विकारित्वमस्थिरत्व-मपायाच्छोकप्राप्तिर्भोगादनुपशान्तिः परपीडा चेत्येतादृशानां दोषाणां दर्शनाद् भवति रागशान्तिः । तत्र दोषभावनया रागो निवर्तते । उक्तं च "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।" (मनु० २।९४) "विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोष-दर्शनादरवीकरणम्" (योग० २।३०। व्यासः) ॥२८॥

सति रागे तु--

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥२९॥

( मलिनचेतसि-उपदेशबीजप्ररोहः-न-अजवत् ) रागाच्चेतो मलिनं

+'बद्धः' पाठो विज्ञानभिक्षोः । अनिरुद्धस्य तु 'बन्धः' पाठः ।

भवति तदा मलिनचेतसि खलूपदेशबीजस्य प्ररोहोऽङ्कुरप्रादुर्भावो न जायते, अजवत्। यथा भार्यारागोपहतेऽजनामके नृपे वसिष्ठोपदेशान्न स्थैर्यप्रादुर्भावो जातः ॥२९॥

अपितु--

नाभासमात्रमपि मलिनदर्पणवत् ॥३०॥

(आभासमात्रम्-अपि न मलिनदर्पणवत् ) रागलिप्तचेतसि तूपदेशस्याभासमात्रमपि न भवति मलिनदर्पणवत्, यथा मलिनदर्पणे मललिप्तेदर्पणे कस्यचिदाभासोऽपि न प्रतिबिम्बति ॥३०॥

अथ च रागलिप्ते मलिनचित्ते किलोपदेशस्यापि स्यादन्यथा भावो यतः----

न तज्जस्यापि तद्रूपता पङ्कजवत् ॥३१॥

(तज्जस्य-अपि तद्रूपता न पङ्कजवत्) तज्जस्य तद्भवस्य खल्वपि तत्सदृशता न भवति पङ्कजवत्, यथा ह्युत्तमं बीजं पङ्के प्रक्षिप्तं न तद्रूपं तद्गुणमुत्पद्यते किन्त्वन्यथैवोत्पद्यते। तस्माद्रागलिप्ते मलिनचित्ते स्यादुत्तमोपदेशस्यान्यथाभावो यतः सोऽन्यथा हि मंस्यते ॥३१॥

भवतु विषयाणां रागो हानिकारकः परन्तु या योगाभ्यासात् विभूतीनां विविधसिद्धीनां प्रवृत्तिस्तया स्यात् कृतकृत्यता किं पुनर्महाप्रयत्नाद् विवेकादुपास्याधानेन। अत्रोच्यते----

न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥३२॥

(भूतियोगे--अपि कृतकृत्यता न) विभूतियोगे विविधसिद्धीनां प्राप्तावपि कृतकृत्यता न भवति ( उपास्यसिद्धिवत् ) यथा हि कृतकृत्यता भवति विवेकादुपास्यसिद्धौ ब्रह्मसम्पत्तौ, यतो विभूतियोगे भवति पुनरावृत्तिः, विवेकादुपास्यसिद्धौ भवति मोक्षः। उपास्यसिद्धिवत्, इति द्विरुक्तिरध्यायसमाप्त्यर्था ॥३२॥

सांख्यदर्शने समाप्तश्चतुर्थोऽध्यायः स्वामिब्रह्ममुनिभाष्योपेतः ॥

——०❀❀०——

# पञ्चमोऽध्यायः

वक्तव्यम्—

अत्राध्यायस्य प्रारम्भे "नेश्वराधिष्ठिते फल···" (२) इति सूत्रजातस्यार्थोऽनिरुद्धविज्ञानभिक्षुभ्यामीश्वरप्रतिषेधपरोऽकारि, यथा "पूर्वसिद्धमीश्वरासत्त्वमिदानीं न्यायेनाह-नेश्वराधिष्ठिते फल···" (अनिरुद्धः) "ईश्वरासिद्धेरिति यदुक्तं तन्नोपपद्यते कर्मफलदातृतया तत्सिद्धेरिति ये पूर्वपक्षिणस्तान्निराकरोति–नेश्वराधिष्ठिते फल···" ( विज्ञानभिक्षुः ) इत्थं तयोरीश्वरप्रतिषेधपरमर्थविधानमयुक्तमेव, ताभ्यां पूर्वसूत्रार्थेष्वीश्वरस्य स्वीकारात्, तं स्वीकृत्यार्थविधानात्। तद्यथा–"अकार्यत्वेऽपि तद्योगः पारवश्यात्–[पारवश्यादुक्तं न तु परार्थत्वात्, स च कः परो यस्य वशे प्रकृतिः ?] परः–आत्मा किंरूपः, इत्याह–स हि सर्ववित् सर्वकर्ता,–ईदृशेश्वरसिद्धिः सिद्धा" (सांख्य० ३।५५-५७-अनिरुद्धः) तथात्रैव पञ्चमाध्यायेऽग्रे "ब्रह्मनिरूपणाय अन्येषां तुल्यरूपमाह–समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" (सांख्य० ५।११६ अनिरुद्धः) अत्रानिरुद्धेन पर आत्मा सर्ववित् सर्वकर्ता तथा ब्रह्मनाम्ना स ईश्वरः स्वीकृतो हि। अथ विज्ञानभिक्षुरपि–"तत्सन्निधानादधिष्ठातृत्वं मणिवत्" (सांख्य० १।९६) इति सूत्रे "पुरुषस्य सन्निधानादेवाधिष्ठातृत्वं स्रष्टृत्वादिरूपमिष्यते···आदिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनम्····· तथा चोक्तं निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते। सत्तामात्रेण देवेन तथा चायं जगज्जनः॥ निरिच्छत्वादकर्ता कर्ता सन्निधिमात्रतः" (विज्ञानभिक्षुः) अत्र विज्ञानभिक्षुणाऽऽदिपुरुष ईश्वरः प्रकृतेः परिणामकर्ता सन्निधिमात्रेणोक्तः, कर्ता स आदिदेवः सन्निधिमात्रेण स्वीकृतस्तथा कथम्भूतः "स हि सर्ववित् सर्वकर्ता–सर्वकर्तेश्वर आदिपुरुषो भवति··· ईदृशेश्वरसिद्धिः सिद्धा यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः सन्निधिमात्रेणेश्वरस्य सिद्धिस्तु श्रुतिस्मृतिषु सर्वसम्मता–अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य···" (सांख्य० ३।५६, ५७ विज्ञानभिक्षुः) अत्र-आत्मनि विराजमानः पुरुषः सर्वज्ञः सर्वकर्ता सान्निध्यतः श्रुतिस्मृतिसम्मतः। सर्वज्ञ एवमीश्वरः स्वीकृतोऽथ च सन्निधानात् सर्वकर्ताऽपि स्वीकृतस्ताभ्याम्। तथाभूत ईश्वरस्तु खल्व-

त्रापि पञ्चमाध्याये स्वीकार्य एव नह्यस्वीकारेण भवितव्यम् । अथ यत्तत्र भाष्ये प्रकृतिलयत्वमादिपुरुषत्वमिति विशेषणं तु ताभ्यां स्वकल्पनया हि दत्तं न तु सूत्रकृता, सूत्रशैल्या तु स एवेश्वरो यः परम्परया स्वीक्रियते तदेतत्पश्यन्तु खल्वस्मद्भाष्ये विपश्चितः । अतस्ताभ्यामीश्वरस्य खण्डन-परमर्थविधानमत्र पञ्चमाध्यायेऽयुक्तमेव, भेदस्तु खल्वियान् यत् पूर्वं तु नित्यशुद्धबुद्धमुक्तस्वभावस्य पुरुषस्य सन्निधिमात्रात् कर्तृत्वं सूचितं न स्वतः । अत्र तस्यैव नित्यशुद्धबुद्धमुक्तस्वभावस्य पुरुषविशेषस्येश्वरस्य जीवेभ्यः कर्मापेक्षं फलप्रदातृत्वं न स्वतः, इति प्रतिपाद्यते । फलप्रदाने स ईश्वरो न सर्वथा स्वतन्त्रः किन्तु कर्मापेक्षः फलप्रदाता स इत्येव लक्ष्यमत्र। अथेदानीं सूत्राण्यर्थाप्यन्तेऽस्माभिः ।

मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥१॥

(मङ्गलाचरणम् ) पूर्वानन्तराध्यायस्यान्तिमसूत्रे "न भूतियोगे कृत-कृत्यता" विभूतियोगे सिद्धियोगे योगप्रतिपादितसाधनैः सिद्धिप्राप्तौ कृत-कृत्यता नेत्युक्तं तद्विषयेऽत्रानुविधीयते यत्तत्र योगसाधनेषु खल्वपि यन्मङ्गलाचरणं मङ्गलानां सर्वप्राणिमङ्गलकारिणामहिंसासत्यादीनां कर्म-णामाचरणमनुष्ठानं स्वात्मीकरणं तु नितान्तमावश्यकं मुमुक्षुणा विवे-किनाऽपि यतस्तदनुष्ठानाद् भवति हि कृतकृत्यता नात्र सन्देहः, तच्चेदं वृत्तम् ( शिष्टाचारात् फलदर्शनात्-श्रुतितः-च-इति ) शिष्टाचारात्-शिष्टानामाचरणात् , फलदर्शनात् तत्फलप्रतिपादनात् , श्रुतितः श्रुतिवि-धानाच्चेति हेतुत्रयात् सिध्यति । तत्र शिष्टाचारः-शिष्टानामाचारः, सन्ति हि "शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः" ( बौधायनधर्मसू० १।१।५ ) तैः शिष्टैराचरितत्वात् सर्वैरपि शिष्टैर्महात्मभिर्ऋषिभिराचरितत्वात् । फल-दर्शनात् तथाभूतानामहिंसादिमङ्गलाचाराणां तथैव योगदर्शने फलं प्रदर्श्यते तस्मात् । तद्यथा "अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः, सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् , अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् , ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः, अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः, शौचा-त्स्वाङ्गजुगुप्सा परैरसंसर्गः-सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च, सन्तोषादनुत्तमः सुखलाभः, कायेन्द्रियसिद्धिरशुद्धिक्षया-त्तपसः, स्वाध्यायादिष्टदेवतासम्प्रयोगः, समाधिसिद्धिरीश्वरप्रणिधानात्" ( योग० २।३५-४५ ) श्रुतितः-श्रुतिविधानात् खल्वपि—"मित्रस्य चक्षुषा

सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे" ( यजु० ३६।१८ ) "तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्" ( ऋ० ७।१०४।१२ ) "न स्तेयमद्मि" ( अथर्व० १४।१।५७ ) "ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत" ( अथर्व० ११।५।१७ ) "मा गृधः कस्यस्विद् धनम्" ( यजु० ४०।१ ) इति हेतुत्रयात् तन्मङ्गलाचरणं तु खल्वनिवार्यत्वेनानुष्ठेयम् ॥१॥

भवतु मङ्गलाचरणं मङ्गलानामहिंसादिकर्मणामाचरणं शिष्टाचारस्तथा च तन्मङ्गलानामाचरणं श्रुतिविहितं च परन्तु फलप्रदर्शनाद् यत्फलप्रदर्शनमुक्तं तन्न युक्तं नहि मङ्गलाचरणरूपाहिंसादिकर्माधीनं फलं सम्पद्यते किन्तु फलं त्वीश्वराधीनमेव तस्याधिष्ठातृत्वे हि जीवात्मानः फलं भुञ्जते स हि फलप्रदाता । उक्तं च "यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥" ( ऋ० १०।१२५।५ ) "इन्द्रो विश्वस्य राजति शन्नोऽस्तु द्विपदे शं चतुष्पदे ।" ( यजु० ३६।८ ) "यो विदधाति कामान् तत्कारणम्" ( श्वेता० ६।१३ ) । अत्रोच्यते—

नेश्वराधिष्ठिते फलसम्पत्तिः + कर्मणा तत्सिद्धेः ॥२॥

( ईश्वराधिष्ठिते फलसम्पत्तिः–न ) ईश्वरस्याधिष्ठितम् , अधिष्ठितमधिष्ठानम् "नपुंसके भावे क्तः" ( अष्टा० ३।३।११४ ) केवलमीश्वराधिष्ठाने फलसम्पत्तिर्न भवति । यतः ( कर्मणा तत्सिद्धेः ) कर्मणा हीश्वराधिष्ठानसिद्धेः, जीवात्मनां कर्मापेक्षं हि खल्वीश्वराधिष्ठानस्य सिद्धिरस्ति न कर्मणा विना । उक्तं यथा "यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि" ( ऋ० १।१।६ ) दाशुषे दत्तवते कर्मसूचना, तथा "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः" ( श्वेता० ६।११ ) स्पष्टमुच्यते हि स ईश्वरः कर्माध्यक्षः कर्मानुसारेण फलप्रदाता । अन्यच्च "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" ( बृह० ४।४।२ ) तस्मान्नेश्वरः कर्मानपेक्षः फलप्रदाता ॥२॥

पूर्वपक्षत्वेनोच्यते—

स्वोपकारादधिष्ठानं लोकवत् ॥३॥

( स्वोपकारात्–अधिष्ठानं लोकवत् ) ईश्वरः स्वामी, स्वामी च स्वानां भवति तर्हि तस्येश्वरस्य ये सन्ति स्वरूपा जीवात्मानस्तेषामुपका-

+'फलसम्पत्तिः' पाठोऽनिरुद्धस्य, 'फलनिष्पत्तिः' विज्ञानभिक्षोः ।

रादुपकारकरणहेतोस्तस्येश्वरस्याधिष्ठातृत्वं भवतु लोकवत्, यथा लोके गृहपतेः परिवारस्वामिनः स्वान् भार्यापुत्रादीनुपकर्तुमधिष्ठातृत्वं भवति कर्मणा विनाऽपि तद्वदीश्वरस्यापि कर्मणा विनाऽधिष्ठातृत्वमस्तु। इदमपि सूत्रमनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चान्यथा व्याख्यातमत्र खलु पूर्वसूत्रस्थकर्मणा शब्दमाश्रित्य पूर्वपक्षेण भवितव्यम् ॥३॥

तत्रैव पूर्वपक्षे पुनरुच्यते—

लौकिकेश्वरवदितरथा ॥४॥

( इतरथा ) अन्यथा यदि स ईश्वरः स्वान् भार्यापुत्रादीन् नोपकुर्वीत तर्हि ( लौकिकेश्वरवत् ) लौकिकानां पदार्थानामीश्वरः स्वामी भूमिस्वामी धनस्वामी यथा भवति तथा स्यात्, तिष्ठतु तथाभूत ईश्वरः कृपणः किं तेनेश्वरेण यद्वा किं तस्यैश्वर्येण ॥४॥

पुनरपि तत्रैव--

पारिभाषिको वा ॥५॥

( वा ) अथवा स निरुपकारकः खल्वीश्वरो भवतु पारिभाषिकः कथनमात्रो वाचनिको नाममात्रो वा काष्ठधेनुवद् यो नोपकुर्वीत। परिभाषा-निन्दा, तद्भाक्-निन्दाभागुपहासभाक्-स्यात् ॥५॥

अथ समाधत्ते—

न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥६॥

( तत्सिद्धिः-रागात्-ऋते न ) कर्माण्यनपेक्ष्योपकारसाधनं रागमन्तरा न सम्भवति ( प्रतिनियतकारणत्वात् ) कर्मानपेक्षितोपकारे रागः प्रतिनियतकारणमनिवार्यकारणमस्ति तस्मात् कर्मापेक्षं तस्येश्वरत्वम् ॥६॥

पुनश्च—

तद्योगेऽपि न नित्यमुक्तः ॥७॥

( अपि तद्योगे ) अपिः सम्भावनायाम्। सम्भवे तद्योगे रागयोगे, यदि तस्येश्वरस्य रागेण सह योगः सम्बन्धः सम्भवो यद्वा तस्मिन्नीश्वरे रागस्य योगः सम्भवति तर्हि ( नित्यमुक्तः-न ) स नित्यमुक्तो न स्यात्, प्रतिपाद्यते हि स खल्वीश्वरो नित्यमुक्तः "स तु सदैव मुक्तः सदैवेश्वरः" ( योग० १।२४ व्यासः ) उक्तं हि पूर्वमत्रापि "नित्यमुक्तत्वम्" ( सांख्य० १।१६२ ) ॥७॥

पक्षान्तरं निराकरोति—

प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥८॥

( प्रधानशक्तियोगात्-चेत् ) प्रधानस्याव्यक्तस्य प्रकृत्याख्यस्य या शक्तिर्भोगप्रदानप्रवृत्तिस्तया सह सम्बन्धत्वात् तया बाध्यमानत्वादीश्वरस्य स्वतन्त्रं कर्मनिरपेक्षमधिष्ठातृत्वं फलप्रदाने, इति चेत् कल्प्येत तर्हि ( सङ्गापत्तिः ) प्रधानस्य प्रवृत्तिशक्त्या सह स सक्तो भविष्यतीति सङ्गापत्तिः, असङ्गश्च स उच्यते "स यत् तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।५) ॥८॥

पुनरपरपक्षं निराकरोति—



सत्तामात्राच्चेत् सर्वैश्वर्यम् ॥९॥

( सत्तामात्रात्-चेत्-सर्वैश्वर्यम् ) अस्ति हि प्रकृतितो भिन्ना चेतनसत्ता तस्येश्वरस्य यद्वा प्रकृतिभिन्ना चेतना हीश्वरसत्ता, सत्तामात्रात्सत्तासद्भावात्तस्याः सत्तायाः स्वधर्मवत्त्वेन भवितव्यमेव तच्च स्वधर्मवत्त्वं कर्मनिरपेक्षं स्वतन्त्रं फलप्रदातृत्वमिति चेदुच्येत तर्हि सर्वेषां प्रकृतितो भिन्नानां सत्तावतां चेतनानां जीवात्मनामपीश्वरत्वमापततीति दोषापातो यतस्तेऽपि प्रकृतिभिन्नाश्चेतनसत्तावन्तस्ततः स्वयमेवेश्वरमनपेक्ष्य भोगं भोक्ष्यन्ते । तस्मात् कर्मनिरपेक्षमीश्वरस्य फलसम्पत्तौ नाधिष्ठातृत्वम् ॥९॥

तथाभूतस्य कर्मनिरपेक्षफलप्रदातुरीश्वरस्य—

प्रमाणाभावान्न तत्सिद्धिः ॥१०॥

( प्रमाणाभावात् तत्सिद्धिः-न ) तथाभूतस्य कर्मनिरपेक्षफलप्रदातुरीश्वरस्य सिद्धिर्नास्ति प्रमाणाभावात् प्रत्यक्षप्रमाणाभावात् । न हि प्रत्यक्षं कश्चिदीश्वरो जनेश्वरः कर्मनिरपेक्षः पुरस्कारं दण्डं वा कस्मैचित् प्रयच्छति । अत्र प्रमाणशब्दात् प्रत्यक्षं प्रमाणमभिप्रेयतेऽग्रेऽनुमानशब्दप्रमाणयोः प्रतिपादनात् ॥१०॥

सम्बन्धाभावान्नानुमानम् ॥११॥

( सम्बन्धाभावात्-अनुमानं न ) सम्बन्धाभावात् कर्मनिरपेक्षफलप्रदातुरीश्वरस्य विषये नियतसम्बन्धाभावाद् व्याप्तिसम्बन्धाभावादनुमानं नास्ति ॥११॥

श्रुतिरपि प्रधानकार्यत्वस्य ॥१२॥

( प्रधानकार्यत्वस्य श्रुतिः-अपि ) नेत्यनुवर्तते । प्रधानस्य कार्यपरि-

णायनविषयिका श्रुतिरपि न कर्मनिरपेक्षाऽपितु जीवकर्मापेक्षाऽस्ति "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च । एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति" (श्वेता० ६।११, १२) स ईश्वरः कर्माध्यक्षः सन्नेकं बीजं प्रधानं कार्यत्वेन बहुधा करोतीति स्पष्टम् , वक्ष्यति ह्यग्रे "न धर्मापलापः प्रकृतिकार्यवैचित्र्यात्" (सांख्य ५।२०) । अथ च कर्मनिरपेक्षस्तु स प्रधानं तत्कार्याणि प्रति हि प्रवर्तते प्रधानस्य तत्कार्याणां च जडत्वाद् धर्माधर्मरूपकर्मणो ज्ञानाभावात् तथाभूतानां कर्माभावाच्च, तथैव वदति सा श्रुतिरपि "निष्क्रियाणां बहूनामेकं बीजं [ निष्क्रियं बीजं ] बहुधा यः करोति" ( श्वेता० ६।१२ ) जीवान् प्रति तु कर्मापेक्ष एव प्रवर्तते स ईश्वरो न हि कर्मनिरपेक्षः फलं प्रयच्छति, अतएव प्रधानस्य कार्यरूपे परिणाममपि जीवकर्मापेक्षः सन्नेव करोतीत्यपि सिद्धम् । अत्रापि "प्रमाणाभावान्न तत्सिद्धिः" (१०) इति सूत्रात् प्रस्तुतसूत्रपर्यन्तमनिरुद्धविज्ञानभिक्षुभ्यामीश्वरखण्डनं कृतम् । महदाश्चर्यं यत् ताभ्यां पूर्वमेव प्रमाणप्रसङ्गे "ईश्वरासिद्धेः" ( सांख्य० १।९२ ) इति सूत्रेणेश्वरस्य खण्डनं कृतमेवात्रापि तथाकरणं तयोरर्थविधानं सूत्रनैरर्थक्यं बालप्रलपनं प्रसज्यते तदेतत्पश्यन्तु मतिमन्तः ॥१२॥

प्रधानकार्यत्वं जीवकर्मापेक्षं प्रधानस्य कार्यरूपे परिणाममीश्वरो जीवकर्मापेक्षः सन् करोतीति यच्छ्रुतितः साधितं तदेव पुनर्युक्तितोऽपि पोष्यतेऽन्यपक्षोत्थापनसमाधानाभ्याम्--

नाविद्याशक्तियोगो निःसङ्गस्य ॥१३॥

( अविद्याशक्तियोगः--न निःसङ्गस्य ) यद्युच्येत प्रधानकार्यत्वं न जीवकर्मापेक्षं किन्तु तत्र कारणमविद्याशक्तियोगः, अविद्याशक्तिसम्बन्धात् स ईश्वरः प्रधानं कार्यरूपे परिणामयेदिति न युक्तं यतो हीश्वरो निःसङ्गो निःसङ्गस्य च नाविद्याशक्तिसम्बन्धः ॥१३॥

भवतु पुरुषो निःसङ्गो परन्तु प्रधानकार्यत्वाय-प्रधानं कार्यरूपे परिणामयितुं पुरुषस्याविद्याशक्तियोगेन भाव्यम । अत्रोच्यते--

तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥१४॥

(तद्योगे तत्सिद्धौ-अन्योऽन्याश्रयत्वम् ) पुरुषस्याविद्याशक्तियोगे सति तत्सिद्धौ प्रधानकार्यत्वसिद्धौ सत्यां खल्वन्योऽन्याश्रयत्वदोषः प्रसज्यते ।

यतोऽविद्याशक्तियोगात् प्रधानकार्यत्वं पुनः प्रधानकार्यत्वनिमित्तेनाविद्यायोगेन भाव्यम् ॥१४॥

अविद्याप्रधानकार्यत्वयोरनादिसम्बन्धो बीजाङ्कुरवदस्ति तस्मान्नान्योऽन्याश्रयत्वं दोषयुक्तमित्यत्रोच्यते--

न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥१५॥

( बीजाङ्कुरवत्-न ) अविद्याप्रधानकार्यत्वयोः--अविद्यासंसारयोः खलु बीजाङ्कुरवदनादिसम्बन्धो नास्ति ( सादिसंसारश्रुतेः ) सादिसंसारस्य श्रुतौ प्रतिपादनात्, संसारो नानादिः किन्त्वादिमान् संसारोऽस्तीति श्रुतिर्वदति "इयं विसृष्टिर्यत आबभूव" ( ऋ० १०।१२९।७ ) "द्यावाभूमी जनयन् देव एकः" ( यजु० १७।१९ ) ॥१५॥

पुनश्चाविद्यास्वरूपे दोषोऽयम्—

विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥१६॥

( विद्यातः—अन्यत्वे ) ब्रह्मणि खल्वविद्याशक्तियोगात् प्रधानकार्यत्वं भवेदिति स्वीकारेऽविद्या स्याद् वस्तुरूपा यस्याः शक्त्या सह ब्रह्म युज्यते पुनस्तस्या अविद्यायाः किल विद्यातोऽन्यत्वे भिन्नवस्तुत्वे ब्रह्मणो बाधप्रसङ्गो भवति, यतो हि यत्खलु विद्यातोऽन्यत्तद् वस्तु खल्वविद्येति कथने ब्रह्म स्यादविद्या तदपि विद्यातोऽन्यत्, विद्या हि ज्ञानं परन्तु ब्रह्म तु द्रव्यं ज्ञानतोऽन्यत पुनस्तस्यापि बाधः स्याद् विद्यातोऽन्यद् विद्यया बाध्यते यतः,विद्या स्वान्यामविद्यां बाधते यथा । अथवाऽविद्या हि विद्यां बाधते विद्यातोऽन्यत्वाद् यदा किलाविद्या तदा न विद्याऽवतिष्ठते पुनस्तयाऽविद्यया युक्तं ब्रह्म बाधितं भवेद् विद्याशून्यं स्यात् । यद्वा ब्रह्मैव न स्यात् तदनिष्टं यतः "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" ( मुण्ड० १।१।९ ) इत्थं ब्रह्मबाधप्रसङ्गदोषान्नैतन्मन्तव्यमुचितम्, अत्र 'ब्रह्म' सूत्रकारेण मतमेवेति स्पष्टम् ॥१६॥

अथ च—

अबाधे नैष्फल्यम् ॥१७॥

(अबाधे नैष्फल्यम्) अबाधे सति-यदि पुनरविद्यया ब्रह्म न बाध्यते तदा विद्यातोऽन्यत्वमन्तव्यस्य निष्फलत्वं स्यादविद्यायाः पुनरकिञ्चित्करत्वं सिध्येत् ॥ १७ ॥

पन्नान्तरमाक्षिप्यते—

विद्याबाध्यत्वे जगतोऽप्येवम् ॥१८॥

( विद्याबाध्यत्वे ) अविद्याया विद्यातोऽन्यत्वं न, किन्तु विद्याबाध्यत्वमेव सैवा विद्यया बाध्यते न हि सा बाधे समर्था न तयाऽन्यद् बाध्यते तस्मान्न ब्रह्मबाधप्रसङ्गः । यदा हि पुरुषे विद्या प्रवर्ततेऽथाविद्या निवर्तते तथारूपाऽविद्या चेदुच्येत तर्हि ( जगतः-अपि-एवम् ) जगदपि खल्वेवं विद्यया बाध्यते-विद्यावतः पुरुषस्य सकाशात् खलु जगदपि निवर्तते "अथात आदेशो नेति नेति" ( बृह० २।३।६ ) एवं जगतोऽपि विद्यया बाध्यत्वाज्जगदपि स्यादविद्या ॥ १८ ॥

भवतु जगदप्यविद्या । अत्रोच्यते—

तद्रूपत्वे सादित्वम् ॥१९॥

( तद्रूपत्वे ) जगतोऽविद्यारूपत्वे सति-यदि हि जगदप्यविद्या तर्हि (सादित्वम् ) अविद्यायाः सादित्वं सिद्धं भवति यतो जगत् सादि तच्च पूर्वं साधितं जगतः सादित्वम् "न बीजाङ्कुरवत् सादिसंसारश्रुतेः" (१५) "इयं विसृष्टिर्यत आबभूव" (ऋ० १०।१२९।७) "द्यावाभूमी जनयन् देव एकः" (यजु० १७।१९ ) इत्थं ह्यविद्या नानादिः पुनश्चाविद्याशक्तियोगाद् ब्रह्म कार्यरूपे प्रधानं परिणमयेदिति न सिध्यति किन्तु जीवकर्मापेक्षः सन्नेवेश्वरः प्रधानं कार्यरूपे परिणमयतीति "श्रुतिरपि प्रधानकार्यत्वस्य" (१२) इत्यनेन यदुक्तं पूर्वं तदेवावतिष्ठते ॥१९॥

अतएव—

न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥२०॥

( धर्मापलापः-न ) धर्मस्याहिंसादिमङ्गलाचरणरूपस्य कर्मणोऽपलापो न भवति यदपेक्षमीश्वरस्याधिष्ठातृत्वं फलप्रदानाय द्वितीयसूत्रे व्यक्तीकृतं तद्युक्तमेव । कुतः ( प्रकृतिकार्यवैचित्र्यात् ) प्रकृतेः कार्याणां वैचित्र्यादुच्चावचत्वात् सुखदुःखरूपत्वात् सकलविकलाङ्गत्वाच्च वक्ष्यति ह्यग्रे "कर्मवैचित्र्यात सृष्टिवैचित्र्यम्" (सांख्य० ६।४२) ॥२०॥

धर्माचरणात्प्रकृतिकार्यवैचित्र्यं सुखित्वादिकमस्तीत्यत्र किं प्रमाणमित्याकांक्षायामुच्यते—

श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥२१॥

( श्रुतिलिङ्गादिभिः-तत्सिद्धिः ) श्रुतिप्रमाणेन लिङ्गप्रमाणेनानुमान-

प्रमाणेनेति यावत्, तथाऽऽदिशब्दाद् योगिनामबाह्यप्रत्यक्षेण च धर्माचरणात्सुखित्वादिकस्य प्रकृतिकार्यवैचित्र्यस्य सिद्धिर्भवति । श्रुतिस्तावत्– "पुण्यो वै पुण्येन कर्मणा भवति ।" ( बृह० ३।२।१३ ) लिङ्गप्रमाणमनुमानप्रमाणं तु जन्मतः सुखसम्पत्तिः सकलाङ्गत्वादिका भोगरूपा पूर्वजन्माचरितधर्मणः फलमिहजन्माचरितोचितकर्मणः सुखभोगफलमिव । योगिनामान्तरिकप्रत्यक्षेणापि सिद्धिर्भवति ॥२१॥

श्रुत्यादीनि प्रमाणानि स्युः प्रत्यक्षं–लौकिकप्रत्यक्षप्रमाणं तु न तत्सिद्धावित्याकांक्षायामुच्यते—

न नियमः प्रमाणान्तरावकाशात् ॥२२॥

( नियमः–न ) प्रत्यक्षप्रमाणेनैव वस्तुसिद्धिः स्यादिति न नियमोऽस्ति, न हि सर्वं प्रत्यक्षप्रमाणेन सिध्यति ( प्रमाणान्तरावकाशात् ) वस्तुसिद्धौ प्रत्यक्षप्रमाणादतिरिक्तप्रमाणानामनुमानादीनामवकाशसद्भावात् ॥२२॥

अथ च—

उभयत्राप्येवम् ॥२३॥

( एवम्–उभयत्र–अपि ) इत्थं श्रुतिलिङ्गादिभिर्धर्मसिद्धिरेवेति न किन्तूभयत्रापि धर्मसिद्धौ तथाऽधर्मसिद्धौ च, समानप्रमाणनिर्देशो विज्ञेयः । तेनाधर्मसिद्धिरपि भवति तैः श्रुतिलिङ्गादिभिः प्रमाणैः । श्रुतिस्तावत् "पापः पापेन" ( बृह० ३।२।१५) लिङ्गप्रमाणादिकं वैपरीत्येन विज्ञेयम् ॥२३॥

धर्मसिद्धौ तु श्रुत्यादिप्रमाणमपेक्ष्यतेऽधर्मसिद्धौ न, तत्सिद्धिस्तु भविष्यत्यर्थापत्त्या हि । अत्रोच्यते—

अर्थात् सिद्धिश्चेत् समानमुभयोः ॥२४॥

( अर्थात् सिद्धिः ) अर्थापत्त्या हि खल्वधर्मस्य सिद्धिर्भविष्यति ( उभयोः समानं चेत् ) उभयोर्धर्माधर्मयोः समानं क्षेत्रं प्रकरणं वर्णनं वा स्यात्, परन्तु यत्र क्षेत्रं–प्रकरणं–वर्णनं वा समानं नास्ति तत्र नाधर्मसिद्धिर्भवेत्, तस्मादधर्मार्थमपि श्रुत्यादिप्रमाणप्रदर्शनं युक्तमेव । तद्यथा "मा हिंसीः पुरुषं जगत्" ( यजु० १६।३, श्वेता० ३।६) "न स्तेयमद्मि" ( अथर्व० १४।१।५७ ) "अक्षैर्मा दीव्यः" ( ऋ० १०।३४।१३ ) "पापमाहुर्यः स्वसारं निगच्छात्" ( ऋ० १०।१०।१२ ) "मा गृधः कस्यस्विद्

धनम्" (यजु० ४०।१) इत्याद्यनुसन्धेयम् ॥ २४ ॥

सिध्यन्तु धर्माधर्मौ तत्फले सुखदुःखे च परन्तु ततः पुरुषे सङ्गापत्तिर्भविष्यति, उच्यते हि "असङ्गो ह्ययं पुरुषः" ( बृह० ४। ३। १५ ) अत्रोच्यते—

अन्तःकरणधर्मत्वं धर्मादीनाम् ॥२५॥

( धर्मादीनाम्–अन्तःकरणधर्मत्वम् ) धर्माधर्मसुखदुःखानामन्तःकरणगुणत्वमस्ति, सन्ति हि धर्माधर्मसुखदुःखानि क्लिान्तःकरणगुणाः। अन्तःकरणं हि करणं साधनमान्तरिकं पुरुषस्य बहिष्करणवत्, यथा ह्यादानादीनि हस्तादिबहिष्करणस्य कर्मेन्द्रियजातस्य यथा च रूपादीनि नेत्रादिबहिष्करणस्य ज्ञानेन्द्रियगणस्य गुणाः सन्ति तथैव धर्माधर्मसुखदुःखानि खल्वन्तःकरणस्योभयेन्द्रियात्मकस्य गुणाः सन्ति करणसामान्याद् यतो ह्यत्रैवाधीयन्तेऽनेनैव प्रतीयन्ते चेति तस्मान्न पुरुषे सङ्गापत्तिः ॥२५॥

यद्येवं तर्ह्यलं विवेकेनेत्यत्रोच्यते—

गुणानां (गुणादीनां ?)+ नात्यन्तबाधः ॥२६॥

( गुणानां–अत्यन्तबाधः–न ) विवेकमन्तरेण तेषां धर्माधर्मसुखदुःखानामन्तःकरणगुणानां सतामप्यत्यन्तबाधो न भविष्यति किन्तु धर्माधर्मयोरदृष्टवशाद् यद्वा धर्माधर्मनिष्पन्नसंस्कारात् तत्फलयोः सुखदुःखयोरनुभूतिस्तु खल्वनिवार्या भविष्यति हीहजन्मनि परजन्मनि वा ॥२६॥

यतः—

पञ्चावयवयोगात् सुखसंवित्तिः ॥२७॥

( पञ्चावयवयोगात्–सुखसंवित्तिः ) निर्णयसाधनानामनुमानविषयकाणां पञ्चावयवानां योगात् प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनानां प्रवर्तनात् खलु भवति हि सुखसंवित्तिः सुखानुभूतिः। यथा सुखसंवित्तिर्धर्मफलं तथा दुःखसंवित्तिरधर्मफलमपि पञ्चावयवयोगात् सिध्यति ॥२७॥

तत्रानुमाने—

न सकृद् ग्रहणात् सम्बन्धसिद्धिः ॥२८॥

( न सकृद्ग्रहणात् सम्बन्धसिद्धिः ) पुनःपुनर्ग्रहणात् पुनःपुनः कार्यकारणयोर्दर्शनात् कार्यकारणयोर्नैकस्मिन् देशे काले वा दर्शनात्

+'गुणादीनां' ( अनिरुद्धः ) 'गुणादीनां च' ( विज्ञानभिक्षुः )

किन्तु देशे देशे काले काले च तथैव दर्शनात् खलु कार्यकारणसम्बन्ध-सिद्धिरनुमाने निमित्तं भवति ॥२८॥

सा हि--

नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥२९॥

( वा ) अथवा ( उभयोः-नियतधर्मसाहित्यम् ) कार्यकारणयोर्नियतस्य धर्मस्य सहभावः ( एकतरस्य व्याप्तिः ) एकतरस्यानुमाने ज्ञाने विषये व्याप्तिर्भवति, यथा धूमाद् अग्नेः सिद्धिः-अग्नेर्वा धूमस्य प्रवर्तनम् ॥२९॥

ननु कार्यकारणयोर्नियतधर्मसाहित्यं व्याप्तिर्या खलूक्ता सा किं ताभ्यां कार्यकारणाभ्यां तत्त्वान्तरमस्तीत्याकांक्षायामुच्यते--

न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥३०॥

( तत्त्वान्तरं न ) व्याप्तिः खलु कार्यकारणाभ्यां तत्त्वान्तरं वस्त्वन्तरं ताभ्यां भिन्नं तृतीयं वस्तु नास्ति। कुतः ( वस्तुकल्पनाप्रसक्तेः ) वस्तु-कल्पनाप्रसङ्गदोषात् , न हि धर्मः कदाचिद् धर्मी भवति व्याप्तिस्तु धर्मः कार्यकारणयोः सहभावे नियतो धर्मः । तस्माद् व्याप्तिः कार्यकारणाभ्यां भिन्नं वस्त्वन्तरं नास्ति ॥३०॥

अवस्तुत्वे पुनः किंस्वरूपा व्याप्तिरित्यत्रोच्यते--

निजशक्त्युद्भवमित्याचार्याः ॥३१॥

( निजशक्त्युद्भवम्-इति-आचार्याः ) निजशक्तेः कार्यकारणयोर्या निजा शक्तिरस्ति तस्या उद्भवमर्थात् कार्यकारणभावे प्रवृत्तयोः पदार्थयोः समानदेशकालवतोः कार्यकारणतामपन्नयोर्व्याप्ता या शक्तिस्तस्या उद्भवं व्याप्तिं मन्येऽहमितीत्थमेवानेके किलाचार्याः सांख्याचार्या मन्यन्ते ॥३१॥

आधेयशक्तियोग इति पञ्चशिखः ॥३२॥

( आधेयशक्तियोगः-इति पञ्चशिखः ) आधारभूते हि कार्यकारणे तयोः कार्यकारणभाव आधेयः, आधेयस्य शक्तियोगः शक्तिसंयोगः समानदेशकालापेक्षः सम्बन्धो व्याप्तिरस्तीति पञ्चशिखो मन्यते ॥३२॥

न स्वरूपशक्तिनियमः पुनर्वादप्रसक्तेः ॥३३॥

(स्वरूपशक्तिनियमः-न) व्याप्तिः खलु निजशक्त्युद्भवः कार्यकारण-

शक्त्युद्भवो वा आधेयशक्तियोगो वोभयविधलक्षणलक्षिता भवितुमर्हति परन्तु स्वरूपशक्तिनियमो न, कार्यद्रव्यस्य कारणद्रव्यस्य च स्वरूपशक्ते-र्नियमनं कार्यत्वं कारणत्वं हि तत्र द्रव्ये स्थितं देशकालमनपेक्ष्य वर्तमानं तत्तद्द्रव्यमात्रं कार्यत्वं कारणत्वं चाप्रादुर्भूतं व्याप्तिर्नास्ति । यतः ( पुनर्वादप्रसक्तेः ) पुनरुक्तिदोषप्रसङ्गात्, यथा घटस्य कार्यस्य देशकाला-वनपेक्ष्य मृत्तिकास्वरूपं मृत्तिकैव यथा मृत्तिकायाः कारणस्य देशकाला-वनपेक्ष्य घटस्वरूपं घट एव यथा धूमस्य कार्यस्य देशकालावनपेक्ष्याग्नि-स्वरूपमग्निरेव यथाग्नेः कारणस्य देशकालावनपेक्ष्य धूमस्वरूपं धूम एवेति कथने पुनरुक्तिरेव वस्तुनो भवति । इदं सूत्रमनिरुद्धवृत्तौ विज्ञानभिक्षु-भाष्ये चान्यथाव्याख्यातं तत्र शक्तो मल्लः, घटः कलशः, इति पर्यायत्व-माश्रित्य पुनरुक्तिर्दर्शिता नह्यत्र पर्यायत्वपुनरुक्तिरभीष्टाऽपि तु स्वरूपपुन-रुक्तिदोषोऽभीष्टः ॥३३॥

तथा—

विशेषणानर्थक्यप्रसक्तेः ॥३४॥

( विशेषणानर्थक्यप्रसक्तेः ) स्वरूपशक्तिनियमो व्याप्तिरितिमन्तव्ये विशेषणस्यानर्थकता प्रसज्यते, मल्लः शक्तः, इति कथनेन किं शक्तिसिद्धं कार्यमन्तरेण, यत् कारणं वस्तु कारणं यत् कार्यं वस्तु कार्यमिति कारण-विशेषणं कार्यविशेषणं व्यर्थं स्यात् यावता कार्यकारणतायाः खलु देशे काले च सहभावप्रसङ्गो न भवेत् ॥३४॥

अपरञ्च—

पल्लवादिष्वनुपपत्तेश्च ॥३५॥

( पल्लवादिषु–अनुपपत्तेः–च ) कार्यकारणयोः स्वरूपशक्तिनियमो व्याप्तिरिति मन्तव्येऽपरोऽयं दोषो यत् पल्लवादिषु दृश्यमानेषु वृक्षादि-रनुमीयते तत्र स्वरूपशक्तिमात्रं कार्यस्य स्वस्मात् कारणात् पृथग्भूतं सदपि विद्यते तदा छिन्नेषु पल्लवादिषु वृक्षोऽत्रेत्यनुमानस्यायुक्तता स्यान्न तत्र वृक्षादयः सन्ति केवलं पल्लवादय एव सन्ति । तस्मान्न स्वरूपशक्ति-नियमो व्याप्तिरस्ति ॥३५॥

किन्तु—

✓ आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥

( आधेयशक्तिसिद्धौ ) आधेयशक्तियोगो व्याप्तिरुक्ता तत्राधेयशक्ति-

सिद्धौ कार्यकारणयोराधारयोराधेयशक्तिः कार्यकारणयोर्नियतधर्मसहभावो व्याप्तिस्तत्सिद्धौ ( निजशक्तियोगः ) निजशक्तियोगः कार्यकारणयोः कार्यत्वकारणत्वरूपा निजा शक्तिर्व्याप्तिरस्ति हि। कुतः ( समानन्यायात् ) कार्यकारणयोः सहभावस्य स्वीकारात् खलु व्याप्तिलक्षणं न दोषयुक्तम् ॥३६॥

धर्मरूपकर्मणः फलसिद्धावनुमानस्य स्वरूपमुक्तं यदनुमानं लिङ्गलिङ्गिनावभिलक्ष्य प्रवर्तते। अधुना तत्रैव शब्दप्रमाणं शब्दार्थावधिकृत्य प्रसिध्यति तत्र शब्दार्थयोः कः सम्बन्ध इत्यत्रोच्यते—

वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः ॥३७॥

( शब्दार्थयोः सम्बन्धः–वाच्यवाचकभावः ) शब्दार्थयोः सम्बन्धः खलु वाच्यवाचकभावोऽस्ति। तत्र शब्दो वाचकोऽर्थो वाच्यः ॥३७॥

तस्य वाच्यवाचकसम्बन्धस्य सिद्धेरुपायमाह—

त्रिभिः सम्बन्धसिद्धिः ॥३८॥

( त्रिभिः सम्बन्धसिद्धिः ) त्रिभिः प्रकारैः–आप्तोपदेशात्, वृद्धव्यवहारात्, प्रसिद्धपदसहचारात् सम्बन्धसिद्धिः शब्दार्थयोः सम्बन्धसिद्धिर्भवति। आप्तोपदेशात्–सास्नावती गौः। वृद्धव्यवहारात्–वत्स गामानय दोहनाय। प्रसिद्धपदसहचारात्–गुरुर्गां दोग्धि ॥३८॥

ननु शब्दस्य प्रामाण्यं क्रियार्थमेव यद्वा वस्तुस्वरूपप्रदर्शनार्थमपि। अत्रोच्यते—

न कार्ये नियम उभयथा दर्शनात् ॥३९॥

( कार्ये नियमः–न ) शब्दस्य प्रामाण्यं क्रियार्थमेवास्तीति नियमो न। यतः ( उभयथा दर्शनात् ) शब्दस्य मन्त्रात्मकस्य क्रियार्थत्वं वस्तुस्वरूपप्रदर्शनार्थत्वं चोभयथा प्रयोजनं दृश्यते "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" (यजु० ४०।२) इति क्रियाविधानम् "अग्निर्होता कविक्रतुः सत्यश्चित्रः श्रवस्तमः" ( ऋ० १।१।३ ) "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० उ० २।१।१। ) इति स्वरूपवर्णनम् ॥३६॥

लोके तु व्यवहारेण शब्दा ज्ञातसम्बन्धाः, कथं हि वैदिकशब्दानामर्थप्रतीतिः स्यादित्यत्रोच्यते—

लोक (वद्) * व्युत्पन्नस्य वेदार्थप्रतीतिः ॥४०॥

( लोकवत्-व्युत्पन्नस्य वेदार्थप्रतीतिः ) लोके यथा लौकिकशब्देषु व्युत्पन्नो जनो विज्ञातवाच्यवाचकत्वसम्बन्धो लौकिकानां शब्दानामर्थान् ज्ञातुं शक्नोति तथैव वैदिकशब्देषु व्युत्पन्नो जनो विज्ञातवाच्यवाचकत्वसम्बन्धो वेदार्थं वैदिकशब्दानामर्थानपि प्रत्येति वाच्यवाचकत्वसम्बन्धसामान्यात् ॥ ४० ॥

लोकवद् व्युत्पन्नस्य वेदार्थप्रतीतिरुच्यते भवतु वेदेऽपि व्युत्पन्नस्य वेदार्थप्रतीतिः, परन्तु वेदे व्युत्पन्नता भवेत् कथम् ? लोके तु त्रिभिरुपायैराप्तोपदेशाद् वृद्धव्यवहारात् प्रसिद्धपदसहचाराद् भविष्यति लौकिकशब्देषु मनुष्यस्य व्युत्पन्नता किन्तु वेदे--

न त्रिभिरपौरुषेयत्वाद् वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥४१॥

( वेदस्य-अपौरुषेयत्वात् ) वेदस्यामनुष्यकृतत्वात् ( तदर्थस्य-अतीन्द्रियत्वात्-अपि ) पुनश्च वेदार्थस्याप्रत्यक्षत्वादपि ( त्रिभिः-न ) त्रिभिरुपायैराप्तोपदेशवृद्धव्यवहारप्रसिद्ध पदसहचारैः सह सम्बन्धो न भवति पुनः कथं वैदिकशब्देषु स्याद् व्युत्पन्नो जनः, न स्याद् व्युत्पन्न इत्यर्थः । इति पूर्वपक्षोक्तिः ॥४१॥

अथ समाधत्ते पूर्वं वेदार्थस्यातीन्द्रियत्वे समाधानमुच्यते--

न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥४२॥

( न ) वेदार्थस्यातीन्द्रियत्वं नास्ति ( यज्ञादेः ) यज्ञदानाध्ययनानाम् ( वैशिष्ट्यात् ) विशिष्टविधिपूर्वकानुष्ठानात् ( स्वरूपतः-धर्मत्वम् ) स्वरूपतस्तत्तद्व्यवहारेण प्रत्यक्षतो धर्मत्वं धर्मफलमुपलभ्यते हि, तस्माद् वेदार्थो नातीन्द्रियः ॥ ४२ ॥

यच्चोक्तमपौरुषेयत्वाद् वेदस्य त्रिभिः सह सम्बन्धाभावाद् वैदिकशब्देषु मनुष्यस्य व्युत्पत्तिर्न स्यात् । अत्र प्रतिविधीयते—

निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥४३॥

( निजशक्तिः-व्युत्पत्त्या व्यवच्छिद्यते ) अपौरुषयत्वेऽपि वेदस्य वैदिकशब्दानामर्थे निजशक्तिः स्वाभाविकी शक्तिरस्ति, शब्दो न ह्यर्थमन्तरेण भवति "शब्दार्थसम्बन्धो नित्यः" ( महाभाष्ये ) शब्दैः सह

* 'लोकव्युत्पन्नस्य' ( अनिरुद्धः ) 'लोके व्युत्पन्नस्य' ( विज्ञानभिक्षुः ) 'लोकवद् व्युत्पन्नस्य' युक्त : पाठः ।

खल्वर्थसम्बन्धेनावश्यं भाव्यमेव स्वाभाविकी साऽर्थशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते विशेषतोऽवच्छिद्यते सम्बध्यते तद्व्युत्पत्त्या मनुष्योऽपि व्युत्पन्नो वेदार्थज्ञाने भवति, सा चादिमहर्षिभिरध्यात्मप्रत्यक्षेण साक्षात्कृता पुनश्च नैरुक्तशैल्या निर्वचनेन शिष्येभ्यो विश्लिष्य ज्ञाप्यते। तस्मान्न दोषः ॥४३॥

एवम्--

योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥४४॥

( योग्यायोग्येषु प्रतीतिजनकत्वात् ) इन्द्रिययोग्येषु लौकिकशब्दार्थेषु तथेन्द्रियायोग्येष्वतीन्द्रियेषु वैदिकशब्दार्थेषु प्रतीतिजनकत्वाज्ज्ञानजनकत्वसाम्यात् ( तत्सिद्धिः ) व्युत्पत्तिसिद्धिर्भवति यया वेदार्थज्ञाने मनुष्यो व्युत्पन्नो जायते ॥ ४४ ॥

यद्यपि वैदिकशब्दानामर्थे स्वाभाविकी शक्तिरस्ति तथापि--

न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥४५॥

( वेदानां नित्यत्वं न ) स्वाभाविकार्थशक्तिमतामपि वेदानां मन्त्रसमूहानां नित्यत्वं यथास्वं वर्तमानत्वं नास्ति ( कार्यत्वश्रुतेः ) तेषां कार्यत्वश्रुतिदर्शनात् "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥" ( यजु० ३१।७ ) "त्रयो वेदा अजायन्त" ( शत० ११।५।८।३ ) ॥ ४५ ॥

वेदानां कार्यत्वं यद्यपि प्रतिपाद्यते तथापि तेषाम्—

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥४६॥

( पौरुषेयत्वं न ) पुरुषकृतत्वं नास्ति तद्भिन्नस्येश्वरस्यैव कार्यमस्ति तेन कृतत्वात्। उक्तं यथा "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे...." ( यजु० ३।७ ) कुतो न पुरुषकृतत्वं वेदानाम्। उच्यते (तत्कर्तुः पुरुषस्य–अभावात् ) तेषां कर्तुः पुरुषस्याविद्यमानत्वात् ॥४६॥

कथमुच्यते तत्कर्तृपुरुषस्याभावो यावता पुरुषाः सन्ति मुक्ता अमुक्ताश्च। अत्रोच्यते—

न मुक्तामुक्तयोरयोग्यत्वात् ॥४७॥

( मुक्तामुक्तयोः–न ) वेदानां कर्ता मुक्तामुक्तयोः कश्चनापि न भवितुमर्हति ( अयोग्यत्वात् ) योग्यत्वाभावात्। मुक्तस्यैश्वर्यं जगद्-

व्यापारवर्जं भवतीत्यतस्तथा प्रयोजनाभावाच्च, अमुक्तस्याल्पज्ञत्वात्; तस्मात् सर्वज्ञ एव जगदीश्वरो वेदानां कर्ता ॥४७॥

कथमेवं वेदानामपौरुषेयत्वं च प्रतिपाद्यते नित्यत्वं च निवार्यते, इत्याकांक्षायामुच्यते—

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥४८॥

( अपौरुषेयत्वात्-न नित्यत्वम्-अंकुरादिवत् ) वेदानमपौरुषेयत्वात् खल्वपि नास्ति नित्यत्वमङ्कुरादिवत्, यथाङ्कुरशाखापत्रपुष्पफलानि खल्वपौरुषेयाणि सन्त्यपि न नित्यानि तान्यपि वेदवदीश्वरकृतानि कार्याणि । तथापि यथा ह्यङ्कुरादीनि प्रवाहेण नित्यानि प्रतिकल्पे प्रवर्तनात् तथैव वेदानां प्रावाहिकनित्यत्वं त्वस्त्येव प्रतिकल्पे प्रवर्तनात्, एवं ज्ञानरूपो वेदस्तु नित्य एव ॥४८॥

पुनः—

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तेः ॥४९॥

( तेषाम्-अपि तद्योगे ) अंकुरादीनामपि पुरुषकर्तृत्वयोगे स्वीकारे ( दृष्टबाधादिप्रसक्तेः ) लोकदृष्टबाधोऽदृष्टकल्पनं च प्रसज्यते, लोकदृष्टस्य प्रत्यक्षस्य बाधस्तथाऽयुक्तानुमानकल्पनं भवेत् ॥४९॥

वस्तुतः—

यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥५०॥

(यस्मिन्-अदृष्टे-अपि) यस्मिन् ह्यदृष्टेऽपि कर्तृत्वयोगे (कृतबुद्धिः-उपजायते ) पुरुषकृतत्वनिश्चयः सञ्जायते ( तत् पौरुषेयम् ) तत्खलु पुरुषकृतं पुरुषकार्यं न च तथाऽङ्कुरादौ जायते न हि वेदेष्वपि ॥५०॥

वेदानां तु—

निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यं ॥५१॥

( निजशक्त्यभिव्यक्तेः ) वेदानां तु स्वाभाविक्या शक्त्याऽभिव्यक्तिमत्त्वात्-अपौरुषेयशक्त्या जगदीश्वरस्य निजशक्त्याऽभिव्यक्तिमत्त्वात् ( स्वतः प्रामाण्यम् ) स्वतः प्रामाण्यमस्ति न हि परतः प्रामाण्यं पौरुषेयाणामिव ॥५१॥

अथ पञ्चचत्वारिंशं सूत्रमारभ्यैकपञ्चाशत्तमसूत्रपर्यन्तसूत्रक्रमस्यान्यो व्याख्यामार्गः—

ननु कथमुच्यते वैदिकशब्दानामर्थे स्वाभाविकी शक्तिर्यावता—

न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥४५॥

( वेदानां नित्यत्वं न ) वेदानां नित्यत्वं नास्ति, न हि वेदा नित्याः सन्ति (कार्यत्वश्रुतेः ) तेषां कार्यत्वश्रुतिदर्शनात् "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।" (ऋ० १०।९०।९) "त्रयो वेदा अजायन्त" (शत० ११।५।८।३) ॥४५॥

समाधत्ते—

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥४६॥

( तत्कर्तुः पुरुषस्य–अभावात् पौरुषेयत्वं न ) वेदानां कार्यत्वमुच्यते पुनः कार्यत्वमाश्रित्य हि तेषामनित्यत्वं साध्यते परन्तु कार्यस्य कर्त्रा भाव्यं किन्तु तत्कर्तुस्तेषां वेदानां कर्तुः पुरुषस्याभावात् पौरुषेयत्वं पुरुषकृतत्वं कार्यत्वं नास्ति पुनः कार्यत्वमवलम्ब्यानित्यत्वं वेदानां न सिध्यति ॥४६॥

कुतो हि वेदानां कर्तुः पुरुषस्याभावः । अत्रोच्यते—

न मुक्तामुक्तयोरयोग्यत्वात् ॥४७॥

( मुक्तामुक्तयोः–न ) वेदानां कर्ता मुक्तामुक्तयोः कश्चनापि न भवितुमर्हति ( अयोग्यत्वात् ) तयोर्योग्यत्वाभावात् । मुक्तस्यैश्वर्यं जगद्व्यापारवर्जं भवति "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" ( वेदा० ४।४।१७ ) तथा प्रयोजनाभावाच्च, अमुक्तस्याल्पज्ञत्वात् । या हि खलु श्रुतिर्दर्शिता वेदानां कार्यत्वं साधयितुं तत्र तु वेदानां जायमानत्वमुक्तं न हि कार्यत्वम्, जायमानत्वं प्रादुर्भावः "जनी प्रादुर्भावे" ( दिवादि० ) प्रादुर्भूता वेदाः । तेन न कार्यत्वं कार्यत्वाभावान्नित्यत्वं वेदानां नात्र क्षतिः ॥४७॥

पुनः पूर्वपक्षत्वेनोच्यते—

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥४८॥

( अपौरुषेयत्वात्–नित्यत्वं न–अङ्कुरादिवत् ) वेदानामपौरुषेयत्वं भवतु जायमानत्वं तु तत्र श्रुतौ प्रतिपाद्यते तेनापौरुषेयत्वाद्धेतोरेव तेषां नित्यत्वं न भवति जायमानत्वधर्मवत्त्वादङ्कुरादिवत्, यथाऽङ्कुरशाखापत्रपुष्पफलानि सन्त्यपौरुषेयाणि परन्तु जायमानत्वान्न नित्यानि, तथैव वेदा अपि जायमानत्वादनित्याः, अन्यथा तान्यपि नित्यानि स्युः ॥४८॥

दृष्टान्तासिद्ध्या समाधत्ते--

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ।।४९।।

( तेषां तद्योगे-अपि ) अङ्कुरादीनामपौरुषेयत्वयोगेऽपि न नित्यत्वम् 'न नित्यत्वम्' पूर्वसूत्रतोऽनुवर्तते । कुतोऽङ्कुरादीनां न नित्यत्वम्। उच्यते ( दृष्टबाधादिप्रसक्तिः ) अङ्कुरशाखापत्रपुष्पफलानि क्रमशो नष्टानि दृश्यन्ते-इति दृष्टस्य बाधनं प्रसज्यतेऽथ च पुनः पुनर्बीजात् प्ररोदयन्तीत्यनुमानहानिः प्रसज्यते । तस्मादङ्कुरादिदृष्टान्तासिद्ध्या वेदानां नित्यत्वनिराकरणं न युज्यते, तेषां तु नित्यत्वमेवापौरुषेयत्वात् ।।४९।।

वेदानां कुतो न पौरुषेयत्वं कुतस्तत्कर्तुः पुरुषस्याभावः ? किमदृष्टत्वाद् यत्तेषां कर्ता केनापि न दृष्ट इति मत्वा । अत्रोच्यते—

यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ।।५०।।

(यस्मिन्-अदृष्टे-अपि कृतबुद्धिः-उपजायते) यस्मिन् खल्वदृष्टेऽपि वस्तुनि कृतबुद्धिः पुरुषकृतत्वबुद्धिर्निश्चिता भवति ( तत् पौरुषेयम् ) तत् पुरुषकृतं विज्ञेयम्, न तथा वेदाः । ते तु प्रादुर्भूताः सन्तो ज्ञानदृष्ट्या नित्याः सन्ति ।।५०।।

तस्मात्—

निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ।।५१।।

( निजशक्त्यभिव्यक्तेः ) वेदानां पुरुषकृतत्वाभावे मनुष्यकृतत्वाभावे निजशक्त्या शाश्वतया स्वाभाविक्या शक्त्याऽभिव्यक्तत्वात् प्रादुर्भूतत्वात् । उक्तं यथा "अस्य महतो भूतस्य निःश्वसितमृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" ( शत० १४।५।४।१० ) "स्वाभाविकी ज्ञानबलक्रिया च" ( श्वेता० ६।८ ) ( स्वतः प्रामाण्यम् ) स्वतः प्रमाणत्वमस्ति ।।५१।।

भवतु वेदानां निजशक्त्याऽभिव्यक्तिरभिव्यक्तत्वं प्रादुर्भावो दर्शनं तथा हि "न, अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ" ( सांख्य० १।१२० ) अनेन सूत्रेण जगतोऽपि सांख्यमतेऽभिव्यक्तिरभिव्यक्तत्वं प्रकटीभावः प्रकाशो वा प्रत्यपादि । श्रुतौ यज्जायमानत्वं वेदानां जगतश्च निर्दिष्टम् "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।।" ( ऋ० १०।९०।९ ) "द्यावाभूमी जनयन् देव एकः" ( यजु० १७।१९) जनीधातोः प्रादुर्भावार्थत्वात् । तदित्थं वेदानां जगतश्चाभिव्यक्तत्वं प्रादुर्भावो दर्शनं वा किमसद्रूपाद्

भवति ? कथं वा भवतीत्याकांक्षायामुच्यते--

नासतः ख्यानं नृशृङ्गवत् ॥५२॥

( असतः ख्यानं न नृशृङ्गवत् ) वेदानां जगतश्च ख्यानमभिव्यक्तत्वं प्रादुर्भावो दर्शनं वा नासद्रूपाद् भवति, न ह्यसतो वस्तुनः ख्यानं दर्शनं भवति नृशृङ्गमिव। तस्माज्जगच्छुक्तौ रजतवन्नास्ति, शुक्तौ रजतख्यानमपि नान्यत्रासतो रजतस्य ॥५२॥

किं पुनः सतां वेदानां सतो जगतो वा ख्यानम्। अत्रोच्यते--

न सतो बाधदर्शनात् ॥५३॥

( सतः-न ) सतां वेदानां सतो जगतोऽपि न तथारूपेणैवाभिव्यक्तत्वं प्रादुर्भावः ख्यानं वा। कुतः ( बाधदर्शनात् ) बाधोऽत्राभावः। सतो वस्तुनो बाधोऽभावो दृश्यते, नहि सर्वकाले वेदाः सन्तो न सर्वकाले जगत् सत्, प्रलयेऽभावात्। तस्मात् सतो विज्ञानात्मनो जगतोऽनादितो वर्तमानस्य वा जगतः ख्यानमित्यपि न युक्तं नहि सर्वकाले सतो वस्तुनः ख्यानमभिव्यक्तत्वं युक्तमभिव्यक्तस्य भावाभावधर्मित्वात् ॥५३॥

तर्हि यद्वस्तुनोऽभिव्यक्तस्वरूपं नासद्रूपतो न सद्रूपतः किन्तु तद्विलक्षणमनिवर्चनीयं स्यात्। अत्रोच्यते--

नानिर्वचनीयस्य तदभावात् ॥५४॥

( अनिर्वचनीयस्य न ) अनिर्वचनीयस्य सदसद्भ्यां भिन्नस्याभिव्यक्तत्वं प्रादुर्भावः ख्यानं दर्शनं स्यादिति न ( तदभावात् ) तस्य सदसद्भ्यां भिन्नस्य वस्तुनोऽविद्यमानत्वादसम्भवात्। तथाभूतस्य वस्तुनो भावः स्यात् तर्हि निर्वचनीयं तत् स्यात्। तस्माज्जगतोऽभिव्यक्तत्वं दर्शनं न सदसद्भिन्नहेतुकं भवति ॥५४॥

अस्तु तर्हि जगतो दर्शनमन्यथैव मिथ्येत्यर्थः—

नान्यथाख्यातिः स्ववचो व्याघातात् ॥५५॥

(अन्यथाख्यातिः-न) अन्यथाख्यानं मिथ्याभिव्यक्तत्वं दर्शनमपि न सम्भवति दृश्यमानस्य जगतः। कुतः ( स्ववचोव्याघातात् ) स्वकथनविरोधात्—उच्यते ह्यस्तीदं जगत् पुनरन्यथा मिथ्याऽपि कथ्यते-- अस्तीति च नास्तीति च वचनविरोधः, न हि सतोऽन्यथात्वं मिथ्यात्वं भवति। तथाऽन्यदन्यात्मनाऽवभासते जगद् यथा रजतात्मना शुक्तिरवभासते तद्वज्जगदन्यात्मनाऽवभासते तद्वचनविरुद्धं यदा जगतोऽसत्त्वं

तदाऽसत्त्वं सत्त्वात्मनाऽवभासेतेति नावसरः सर्वस्यान्यथात्वान्मिथ्यात्वात् पुनः किं केन रूपेणावभासेत। तस्मान्न जगच्छुक्तौ रजतवदन्यथाऽभिव्यक्तं ख्यातं वा ॥५५॥

वस्तुतस्तु--

सदसत्ख्यातिर्बाधाबाधात् ॥५६॥

(सदसत्ख्यातिः) सदसत्ख्यानम्–यत्खलु वस्तु प्रादुर्भवति तस्य सदसत्ख्यानमभिव्यक्तत्वं दर्शनं वा भवति, वेदानां जगतोऽपि प्रादुर्भूतत्वमभिव्यक्तत्वं सदसदात्मना विज्ञेयम्। कुतः (बाधाबाधात्) अबाधात्–यावन्न स्याद् बाधोऽभावस्तावत् सद्रूपेण ख्यानं दर्शनं वर्तमानत्वं वा, बाधात्–यदा बाधोऽभावो भवेत् तदाऽसद्रूपेण वर्तमानत्वं भवति। यद्वा सदात्मकं बाधात् सद्भूतस्य विद्यमानस्यैव बाधः प्रलयेऽभावो भवति तस्मात् सदात्मकम्, असदात्मकं चाबाधान्न ह्यसद्रूपेण वर्तमानस्यानभिव्यक्तस्याभावो भवति। तस्माज्जगदिदं पर्यायेण सदसद्धर्मकमस्ति न नितान्तं सन्न नितान्तमसदित्यर्थः ॥५६॥

इदानीं शब्दविषये सांख्यसिद्धान्तः पक्षविपक्षाभ्यां प्रदर्श्यते—

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥५७॥

(स्फोटात्मकः–शब्दः–न) वाचा खलूच्चार्यमाणः श्रोत्राभ्यां श्रूयमाणः शब्दो ध्वन्यात्मकः पुनरुच्चारणानन्तरमर्थस्य स्फुटीकरणहेतुत्वाद् ध्वन्यात्मकाद् भिन्नः स्फोटात्मकः कल्प्यते। अत्र सांख्यसिद्धान्ते स न स्वीक्रियतेऽत एवोच्यते स्फोटात्मकः शब्दो नास्ति। कुतः। उच्यते (प्रतीत्यप्रतीतिभ्याम्) वस्तुनोऽस्तित्वनास्तित्वसाधने प्रतीत्यप्रतीती भवतः, यः प्रतीयते सोऽस्ति यश्च न प्रतीयते स नास्ति। ध्वन्यात्मकस्य शब्दस्य तु प्रतीतिरस्ति तदनन्तरं स्फोटात्मको यः कल्प्यते तस्याप्रतीतिरस्ति। तस्मात् स्फोटात्मकः शब्दो न स्वीक्रियते सांख्यसिद्धान्ते ॥५७॥

ननु स्फोटात्मकः शब्दो न स्वीक्रियते किं शब्दो नित्यः स्वीक्रियते–इत्याकांक्षायामुच्यते--

न शब्दनित्यत्वं कार्यताप्रतीतेः ॥५८॥

(शब्दनित्यत्वं न) शब्दस्य नित्यत्वं नास्ति। कुतः (कार्यताप्रतीतेः) कार्यतायाः प्रतीतेः, प्रत्यक्षं ह्युच्चारणेनोत्पद्यते खलु शब्दः ॥५८॥

ननु सांख्यमते स्फोटात्मकः शब्दो न मन्यते न च शब्दस्य

नित्यत्वं स्वीक्रियते, तदा शब्दोच्चारणात् पश्चात् तस्योभयप्रकाराभ्यां स्थिरत्वाभावादर्थप्रतीतिः कथं भविष्यतीत्यत्रोच्यते—

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥५९॥

( पूर्वसिद्धसत्त्वस्य-अभिव्यक्तिः-दीपेन-इव घटस्य ) उच्चरितेन शब्देन पूर्वतःसिद्धस्य सत्त्वस्यार्थस्याभिव्यक्तिर्भवति यथा दीपेन घटस्य पूर्वतो वर्तमानस्याभिव्यक्तिः प्रकटता भवति, दीपेन दृष्टं घटमुत्थाप्य गच्छति जनः, घटदर्शनकाले दीपस्यावश्यकता स्वायत्तीकृते घटे न दीपोऽपेक्ष्यते दीपदृष्टान्तस्य प्रकाशकत्वमात्रमेव गृह्यते । तस्माच्छब्दस्य स्फोटात्मकतया यद्वा नित्यभावेन स्थिरत्वं नापेक्ष्यते ॥५९॥

एवं तु सत्कार्यसिद्धान्त आपतति । उच्यते—

सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥६०॥

( सत्कार्यसिद्धान्तः-चेत् सिद्धसाधनम् ) सत्कार्यसिद्धान्तश्चेत् तदा सिद्धस्य सांख्याभिमतस्य सिद्धपक्षस्य साधनं तदभीष्टमेव, न दोषः ॥६०॥

अथान्तिमसूत्रद्वयस्यान्योऽर्थः, तत्र पुनः पूर्वपक्षत्वेनोच्यते—

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥५९॥

( पूर्वसिद्धसत्त्वस्य-अभिव्यक्तिः-दीपेन-इव घटस्य ) यदा शब्दो न स्फोटात्मको न च नित्यस्तदा तु पूर्वं सिद्धं सत्त्वं स्वरूपं यस्य तथाभूतस्यार्थस्य शब्दोच्चारणेनाभिव्यक्तिर्भवति सत्कार्यतया यथा दीपेन घटस्य सदात्मनः पूर्वतो वर्तमानस्याभिव्यक्तिर्भवतीति मन्तव्यं भवेत् ॥५९॥

उत्तरयति--

सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥६०॥

( सत्कार्यसिद्धान्तः-चेत् ) एष पूर्वतः सदात्मनो वर्तमानस्याभिव्यक्तिवादस्तु सत्कार्यसिद्धान्तः सांख्येऽभीष्टः स चेदापतेत् तर्हि ( सिद्धसाधनम् ) सांख्ये सिद्धस्य पक्षस्य साधनं न तु दोषः ॥६०॥

सत्कार्यवादः सदसद्भ्यां वस्तुनः ख्यानं जीवात्मनः कर्मवशाज्जगद्द्वैविध्यमिति जीवात्मनः प्रकृतेश्च सत्तामाश्रित्य साध्यते परन्तु भवेतां प्रकृतिजीवात्मानौ किन्तु ब्रह्मात्मनः स्वरूपतो भिन्नवस्तुनी नेति कल्पनां निराकर्तुमाह--

नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥६१॥

( आत्मनः-अद्वैतं न ) आत्मा नैक एव, न हि ब्रह्मात्मैव किन्तु

जीवात्माऽप्यस्ति । यतः ( लिङ्गात् तद्भेदप्रतीतेः ) ब्रह्मात्मजीवात्मनोः पृथक् पृथग्लिङ्गात् तयोर्भेदप्रत्यक्षात् । तद्यथा–"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥" ( ऋ० १।१६४।२० ) ॥ ६१ ॥

प्रकृत्या सह स्याद् ब्रह्मात्मनोऽभेदः सोऽपि—

नानात्मनाऽपि प्रत्यक्षबाधात् ॥६२॥

( अनात्मना–अपि न ) अनात्मना जडेन प्रकृत्याख्येन प्रधानेन सहापि नाद्वैतमपार्थक्यमैक्यम् । यतः ( प्रत्यक्षबाधात् ) प्रत्यक्षं हि दृश्यते प्रकृतिपरिणामो जगन्नश्यमानं तत्रापि नश्वरधर्मत्वमापद्येत किन्तु स तु प्रकृतिं परिणमयति "एकं बीजं बहुधा यः करोति" ( श्वेता० ६।१२ ) ॥६२॥

प्रकृतिजीवात्मभ्यामुभाभ्यां सह सकृदैकात्म्यं गतः स्यात् । अत्रोच्यते--

नोभाभ्यां तेनैव ॥६३॥

( उभाभ्यां न तेन–एव ) प्रकृतिजीवात्मभ्यामुभाभ्यां सहापि नाद्वैतं गतो भवति तेन पूर्वोक्तेनैव लिङ्गभेदप्रत्यक्षबाधरूपेण हेतुना ॥६३॥

कथं तर्ह्यद्वैतकथनं श्रुतौ "आत्मा वा इदमेक एवाग्र आसीत्" ( ऐ० उ० १।१।१ ) । अत्रोच्यते--

अन्यपरत्वमविवेकानां तत्र ॥६४॥

( तत्र–अविवेकानाम् ) तत्र श्रुतौ खल्वद्वैतकल्पनं विवेकरहितानामेव, यतः ( अन्यपरत्वम् ) श्रुतेरन्यपरत्वं सृष्टिरचनापरत्वमस्ति "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति" ( ऐ० उ० १।१।१ ) सृष्टितः पूर्वं चेष्टमानो ब्रह्मात्मा ह्यासीज्जीवात्मानो निश्चेष्टा आसन् प्रकृतिरपि निश्चेष्टाऽऽसीत् ॥६४॥

भवतु श्रुतिः सृष्टिरचनापरा परन्तु तत्र जगत्कारणत्वं ब्रह्मात्मनः किमुपादानत्वेन ? न वेत्याकांक्षायामाह--

नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥६५॥

( आत्मा–अविद्या जगदुपादानकारणं न–उभयं न निःसङ्गत्वात् ) ब्रह्मात्मा जगतो नोपादानकारणं निःसङ्गत्वात्, उपादानं हि खलु कम-

प्यन्यं सङ्गत्यैव कार्यात्मना भासते मृत्तिका यथा कुम्भकारं दण्डचक्रादिकं सङ्गत्य घटरूपेण कार्यात्मना सञ्जायते। अविद्याऽपि नोपादानकारणम्, अविद्या हि खल्ववस्तुरूपा न ह्यवस्तु संसर्गसमर्थम्, ब्रह्मात्माऽथाविद्या च परस्परं सङ्गत्योपादनं भवेत् तदपि न निःसङ्गत्वादेव नहि वस्त्ववस्तुनोः सङ्गो भवति। एवं सांख्यमते ब्रह्मात्मा जगत उपादानकारणं न किन्तूपादानकारणमन्तरेण भवतु निमित्तकारणमिति न निषेधस्तस्मान्निमित्तकारणम् ॥६५॥

आत्माद्वैतं निरस्तं परमात्मा जीवात्मा च स्तः, तत्र विशेषोऽवधार्यते--

नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥६६॥

( द्वयोः-एकस्य-आनन्दचिद्रूपत्वे न ) परमात्मजीवात्मनोरेकस्य जीवात्मन आनन्दचिद्रूपत्वे न स्तः स तु चिदेव परमात्मनस्तु स्त एव, कुतः ( भेदात् ) भेदेन वर्णनात् "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' ( तै० उ० २।७ ) अत्राऽऽनन्दो जीवात्मनि नास्ति चेतनत्वमेवेति स्पष्टं तथाऽऽनन्दस्तु परमात्मनि विद्यते तमानन्दरूपं लब्ध्वा हि जीवात्माऽऽनन्दमनुभवति ॥६६॥

जीवात्मा स्वरूपत आनन्दरूपो न भवेत् परन्तु मुक्तौ तु स्यात् स आनन्दरूपः। अत्रोच्यते—

दुःखनिवृत्तेर्गौणः ॥६७॥

( दुःखनिवृत्तेः--गौणः ) मुक्तौ दुःखनिवृत्तिर्जायते तदा तत्रानन्दरूपो भवत्यात्मा गौणो न मुख्यः, न हि तदा स आनन्दरूपो भवति किन्तु स आनन्दी भवति तेनानन्दरूपेण परमात्मना सहानन्दी धनेन धनीव भवति ॥६७॥

तदाऽऽनन्दरूपत्वं तस्य--

विमुक्तिप्रशंसा मन्दानाम् ॥६८॥

( विमुक्तिप्रशंसा मन्दानाम् ) मुक्तावानन्दाभिव्यक्तिः खलु विमुक्तिप्रशंसा मन्दानां दृष्टौ विवेकिनां तु दुःखनिवृत्तिः ॥६८॥

दुःखनिवृत्तिर्मुक्तिरानन्दो गौणभावेनोच्यते प्रशंसायां यत आनन्दः सुखम्, पुनः सुखदुःखानुभूतिर्मनसा भवति, मनसो न व्यापकत्वं यन्मुक्तावपि तेनानन्दानुभूतिः स्यादित्येवोच्यते—

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वास्यादिवच्चक्षुरादिवत् ॥६९॥

( मनसः-व्यापकत्वं न ) मनसो विभुत्वं नास्ति ( करणत्वात्-वास्यादिवत् ) करणमुपकरणं साधनं साधनत्वात् कुठारादिवत् ( वा ) अथवा ( इन्द्रियत्वात्-चक्षुरादिवत् ) एकादशेन्द्रियेषु तस्येन्द्रियभावाच्चक्षुरादिवत्। यथैव हि कुठारादीनि साधनानि चक्षुरादीनीन्द्रियाणि न व्यापकानि सर्वत्र स्वव्यापारकराणि तथैव मनोऽपि ॥६९॥

तत्रैवापरो हेतुः--

सक्रियत्वाद् गतिश्रुतेः ॥७०॥

( सक्रियत्वात् ) मनसः क्रियावत्त्वात् क्रियामयात् परिणामरूपक्रियामयात् ( गतिश्रुतेः ) पुनस्तस्य गतिश्रुतित्वात् "यद् वो मनः परागतं यद् बद्धमिह वेह वा। तद् व आवर्तयामसि···" ( अथर्व० ७।१३।४ ) "गच्छतीव च मनः" ( केनो० ४।५) ॥७०॥

मनो न स्याद् व्यापकं किन्तु भवेदणु यथा जीवात्माऽणुरस्ति स मोक्षेऽवतिष्ठते तद्वन्मनोऽपि स्यादणु मोक्षानन्दं परिचाययेदत्रोच्यते--

न निर्भागत्वं तद्योगाद् घटादिवत्+ ॥७१॥

( निर्भागत्वं न ) अणुत्वेऽपि मनसो निर्भागत्वं भागराहित्यं नास्ति (तद्योगात्-घटादिवत् ) भागयोगाद् घटादिवत्, यथा घटः पटः कटो वेत्येवमादिपदार्थः स्वभागैर्युक्तः प्रयुक्तश्च भवति तथैव मनोऽपीति सर्वजनानुभूतिः, न हि मनः सर्वेन्द्रियैः सह सकृत् संयुज्यते सत्त्वरजस्तमोभिरवयवैश्च लक्ष्यते ॥७१॥

नित्यं स्यान्मनस्तस्य जीवात्मना सह नित्यसम्बद्धत्वान्मोक्षानन्दानुभूतिनिमित्तं भवेदित्याकांक्षायामुच्यते—

प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ॥७२॥

( प्रकृतिपुरुषयोः-अन्यत् ) प्रकृतिपुरुषाभ्यां भिन्नम् ( सर्वम्-अनित्यम् ) सर्वं वस्तुजातं खल्वनित्यं न हि नित्यमस्ति, किं मन एवानित्यमिति न किन्तु प्रकृतिपुरुषौ विहाय मन आदिकं सर्वमनित्यम् ॥७२॥

+'घटादिवत्' पाठोऽनिरुद्धस्य 'घटवत्' विज्ञानभिक्षोः।

सभागः पदार्थोऽनित्यः, प्रकृतिपुरुषौ न सभागावित्यपि दर्शयति--

न भागलाभो भोगिनो॥ निर्भागत्वश्रुतेः ॥७३॥

( भोगिनः-भागलाभः-न ) भोगोऽस्यास्तीति भोगी जीवात्मा तथा भोगोऽस्यामस्तीति भोगिनी प्रकृतिः, सूत्रे भोगिनः-एकशेषत्वं सामान्येनैकवचनं च । भोगिनो भोगमनुतिष्ठतो भोक्तुस्तथा भोगवतो भोगाधिष्ठानस्य प्रकृत्याख्यस्याव्यक्तस्य भागलाभो भागसिद्धिः सावयवता नास्ति भोगस्यैव भागसिद्धिः सावयवता भवति न तु प्रकृतेः पुरुषस्य ( निर्भागत्वश्रुतेः ) जीवात्मनः प्रकृतेश्च निर्भागत्वश्रुतिदर्शनात् "अजो ह्येको जुषमाणोऽनुशेते अजामेकां लोहितशुक्लकृष्णाम्" ( श्वेता० ४।५) मनस्तु सभागं सावयवमत एवानित्यं तस्यानित्यत्वान्मुक्तौ न तदानन्दानुभूतिसाधनं कल्पयितुं युज्यते ॥७४॥

एवम्—

नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मकत्वात्+ ॥७४॥

(आनन्दाभिव्यक्तिः-मुक्तिः-न) आनन्दस्याभिव्यक्तिः प्रादुर्भावो मुक्तिर्नास्ति ( निर्धर्मकत्वात् ) तस्यात्मन आनन्दरूपधर्मरहितत्वात् ॥७४॥

ननु भवतु मुक्तिरात्मनो विशेषगुणस्योच्छेदो येन स बध्यते । अत्रोच्यते--

न विशेषगुणोच्छित्तिस्तद्वत् ॥७५॥

( विशेषगुणोच्छित्तिः-न तद्वत् ) विशेषगुणोच्छेदो मुक्तिरित्यपि न तद्वत् पूर्वोक्तान्निर्धर्मकत्वाद्धेतोः । यथा ह्यात्मन आनन्दो गुणो नास्ति यस्तस्य मुक्तौ प्रादुर्भवेत् तथैवात्मनो नैतादृशो गुणो यो मुक्तौ विनश्येत् तस्य तथाभूतगुणेन रहितत्वात् । मुक्तौ खलु न कश्चिद् गुण उपजायते न हीयते-आत्मन उपजनापायगुणरहितत्वात् ॥७५॥

अथ--

न विशेषगतिर्निष्क्रियस्य ॥७६॥

( विशेषगतिः--न निष्क्रियस्य ) संसारादूर्ध्वं काचिद् विशिष्टा गतिर्मुक्ति र्न निष्क्रियस्यात्मनः । मुक्तिर्हि कैवल्यमात्मनः, गतिश्च लिङ्ग-

॥'भोगिनो' पाठोविज्ञानभिक्षोः 'अनिरुद्धस्य तु भागिनो' ।

+'निर्धर्मकत्वात्' पाठोऽनिरुद्धस्य 'निर्धर्मत्वात्' विज्ञानभिक्षोः ।

शरीरादिकमपेक्ष्य भवति तदा सा स्थितिर्न कैवल्यस्थितिर्मुक्तिः ।।७६।।

पुनश्च—

नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ।।७७।।

( आकारोपरागोच्छित्तिः--न ) विषयाकारस्योपरागात् क्षणिकविज्ञानरूपे ह्यात्मनि बन्धो भवति, तस्य विषयोपरागस्योच्छेदो मुक्तिरित्यपि न ( क्षणिकत्वादिदोषात् ) मुक्तेः क्षणिकत्वमापद्येत तथोपायेऽपुरुषार्थत्वं क्षणान्तरे स्वतो बन्धनिवृत्तिप्रसङ्गश्चापद्येत तस्मात् ।।७७।।

तथा--

न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ।।७८।।

( सर्वोच्छित्तिः--न ) सर्वस्य विज्ञानस्वरूपस्यात्मनश्चापि खलूच्छेदो मुक्तिर्न युक्ता ( अपुरुषार्थत्वदिदोषात् ) नह्यात्मनाशः पुरुषार्थस्तथा निरवयवस्य चेतनस्य नाशप्रसङ्गदोषश्चापद्यते न हि चेतनस्य निरवयवस्य नाशेन भाव्यम् ।।७८।।

एवं शून्यमपि ।।७९।।

( शून्यम्–अपि–एवम् ) एवं शून्यमपि मुक्तिर्न युक्ताऽपुरुषार्थत्वादिदोषात् । शून्यरूपायै मुक्त्यै पुरुषार्थस्य नैरर्थक्यं तथा ज्ञातुरात्मनः शून्यत्वे नाशप्रसक्तिः किन्तु तन्नाशासम्भवः ।।७९।।

अथ--

संयोगाश्च वियोगान्ता इति देशादिलाभोऽपि ।।८०।।

( देशादिलाभः–अपि न ) विशेषदेशाङ्गनासुखभोगादिलाभोऽपि मुक्तिर्न युक्ता (च) यतश्च (संयोगाः–वियोगान्ताः-इति) बाह्यवस्तुसमागमाः खलु वियोगान्ताः सन्तीति हेतोः । उच्यते च "संयोगाश्च वियोगान्ता मरणान्तं च जीवितम्" (बाल्मीकि० रा० अयो०१०५।१६) ।।८०।।

पुनः—

न भागियोगो भागस्य ।।८१।।

( भागस्य भागियोगः--न) भागस्यांशस्यांशरूपजीवात्मनो भागिन्यंशिनि परमात्मनि योगः संयोगो लयो वा न मुक्तिर्युज्यते । संयोगो हि वियोगान्त इति हेतोस्तथा लये ह्यात्मनाशात , न चाखण्डस्य परमात्मनो

जीवात्मा तथाभूतो भागोंऽशः खण्डो यथा खण्डवत्यां पृथिव्यां खण्डाः पाषाणादयः संयुज्यन्ते विलीयन्ते च। जीवात्मा तु परमात्मन एकदेशवर्तित्वादंशस्तस्मिन् तस्य तथायोगस्तु बद्धस्यापि वर्तते हि ॥८१॥

अन्यच्च—

नाणिमादियोगोऽप्यवश्यम्भावित्वात्त-
दुच्छित्तेरितरयोगवत् ॥८२॥

( अणिमादियोगः – अपि न ) अणिमादिप्राप्तिरपि न मुक्तिः "अणिमा भवत्यणुः, लघिमा लघुर्भवति, महिमा महान् भवति, प्राप्तिः, ···प्राकाम्यमिच्छानभिघातः, वशित्वं भूतभौतिकेषु वशी भवति, ईशितृत्वम्, कास्यं यत्र कामावसायित्वम्" ( योग० ३।४५ व्यासः ) कुतः ( तदुच्छित्तेः--अवश्यम्भावित्वात्–इतरयोगवत् ) तत्क्षयस्यावश्यम्भावित्वादन्ययोगस्य यथा वियोगः क्षयो भवति तथैवाणिमादियोगस्यापि वियोगेन क्षयेण भाव्यमेव ॥८२॥

तथैव—

नेन्द्रादिपदयोगोऽपि तद्वत् ॥८३॥

( इन्द्रादिपदयोगः–अपि न तद्वत् ) इन्द्रबृहस्पत्यादिपदप्राप्तिरपि मुक्तिर्न युक्ता योगस्य वियोगधर्मत्वात् प्राप्तेः क्षयधर्मत्वात् ॥८३॥

इन्द्रस्तु यस्येन्द्रियाणि लिङ्गानि स खल्वहमात्मा "इन्द्रियमिन्द्रलिङ्गं···" ( अष्टा० ५।२।६३ ) यतस्तस्मात—

न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥८४॥

( इन्द्रियाणां तत्प्रकृतित्वं न ) इन्द्रियाणि भूतप्रकृतीनि न, भूतेभ्यः पृथिव्यादिस्थूलभूतेभ्यो नोत्पन्नानि । तेषाम् ( आहङ्कारिकत्वश्रुतेः ) इन्द्रियाणामाहङ्कारिकत्वमहङ्कारादुत्पत्तिः श्रूयते न स्थूलभूतेभ्यः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ( मुण्डको० २।१।३ ) अत्रेन्द्रियेभ्यः पश्चात् स्थूलभूतानामुत्पत्तिस्तथेन्द्रियाणामुत्पत्तिस्तु तेभ्यः पूर्वमेव। तस्मादिन्द्रियाणि स्थूलभूतेभ्यो नोत्पन्नानि। तथा कृत्वैव सांख्यदर्शनेऽत्र "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि···" ( सांख्य० १।६१ ) अत्राहङ्कारात् पञ्चतन्मात्राणि तथोभयमिन्द्रियमिति गणद्वयस्योत्पत्तिर्दर्शिता सांख्यमते

पञ्चतन्मात्रेभ्यः पश्चादिन्द्रियाणां निर्देशात्तानीन्द्रियाणि पञ्चतन्मात्रेभ्यः पश्चादुत्पन्नानि मन्तुं शक्यन्ते, श्रुतौ तन्मात्राणां निर्देशो नास्ति पञ्च-भूतानामुत्पत्तिर्दर्शिता ततश्च पूर्वमिन्द्रियाणाम्, इत्थं स्थूलभूतेभ्य इन्द्रिया-णामुत्पत्तिकल्पना तूभयत्रापि न युज्यते ॥८४॥

अथ च तत्रैव मुक्तिविषये—

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥८५॥

(षट्पदार्थनियमः-न) मुक्तिविषये षट्पदार्थानां नियमो नास्ति । यत् (तद्बोधात्-मुक्तिः) तेषां षट्पदार्थानां बोधादेव मुक्तिर्भवति । भवतु षट्-पदार्थानामपि बोधस्यापेक्षा मुक्तौ परन्तु प्रकृतिपुरुषयोर्विवेकस्यानिवार्य-त्वमस्ति । न हि षट्पदार्थबोधस्य नियमो मुक्तौ । अत्र नियमशब्दो न सर्वथा तत्पक्षनिराकरणाय किन्तु प्रतिबन्धाभावदर्शनार्थः, भवतु सोऽपि पक्षः । यथाऽन्यत्र "न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमान-त्वात्" ( सांख्य० ४।१०३ ) भवतु स्थूलशरीरमपि परन्तु सूक्ष्मशरीरमपि त्वनिवार्यमस्ति । तथा च "न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधि-वनस्पतिवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्" (सांख्य० ५।१२१) भवतु बाह्यबुद्ध्याऽपि भोगः किन्तु तत्रान्तर्बुद्धेः खल्वप्यनिवार्यत्व-मस्ति ॥८५॥

तथा—

षोडशादिष्वप्येवम् ॥८६॥

( षोडशादिषु-अपि-एवम् ) षोडशादिषु पदार्थेषु खल्वपीत्थं मन्तव्यं यन्न षोडशादिपदार्थबोधादेव मुक्तिः, भवतु तद्बोधादपि मुक्तिः परन्तु न नियमः प्रतिबन्धः, प्रकृतिपुरुषयोर्विवेकस्तु खल्वनिवार्यो मुक्तौ ॥८६॥

मुक्तौ प्रकृतिपुरुषयोर्विवेकोऽनिवार्यत्वेनापेक्ष्यते तौ हि नित्यौ स्तः, पुरुषश्चेतनः प्रकृतिर्जडा सा जगदुपादानकारणं तस्मात्तयोर्विवेकापेक्षा, अतो नान्यस्य कार्यभूतस्यैव बोधे नियमो मुक्तये । एवमणूनां तन्मात्राणां बोधस्यापि नियमो मुक्तौ न यतः—

नाणुनित्यता तत्कार्यत्वश्रुतेः ॥८७॥

( अणुनित्यता न ) अणुशब्दोऽत्र पृथिवीतन्मात्रजलतन्मात्रादिपरः "पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः-आप्यस्य रसतन्मात्रं तैजसस्य रूपतन्मात्रं वायव्यस्य स्पर्शतन्मात्रमाकाशस्य शब्दतन्मात्रम्" ( योग०

१।४५ व्यासः ) अणूनां तन्मात्राणां नित्यता नास्ति ( तत्कार्यत्वश्रुतेः ) तेषामणूनां तन्मात्राणां कार्यत्वं श्रूयते "इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् । इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥" ( अथर्व० २०।११६।४ ) अत्र 'सुवानास इन्दवः' उत्पद्यमाना अणवः । तथा "अण्वो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः । ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः" ( मनु० १।२७ ) ॥८७॥

अत एव—

न तन्निर्भागित्वं कार्यत्वात् ॥८८॥

( तन्निर्भागित्वं कार्यत्वात्–न ) तेषामणूनां तन्मात्राणां कार्यत्वात् निर्भागित्वं भागराहित्यं मूलत्वं जगतो मूलकारणत्वं नास्ति, तस्मात् प्रकृतिवत् तेषां बोधस्य मुक्तौ न मुख्यत्वं विज्ञेयम् ॥८८॥

भवतु सांख्यमते प्रकृतिपुरुषसाक्षात्कारो मोक्षहेतुः परन्तु प्रकृतिपुरुषौ न रूपवन्तौ पुनस्तयोः कथं प्रत्यक्षत्वमित्यत्रोच्यते—

न रूपनिबन्धनात् प्रत्यक्षत्वनियमः ॥८९॥

( रूपनिबन्धनात् प्रत्यक्षत्वनियमः–न ) रूपनिमित्तात् प्रत्यक्षत्वस्य नियमो नास्ति, यद् रूपवदेव वस्तु प्रत्यक्षं भवति रूपरहितं नेति प्रतिबन्धो नास्ति सांख्यप्रत्यक्षे, भवतु रूपवदपि प्रत्यक्षं किन्तु रूपरहितमपि प्रत्यक्षं भवति तस्य सांख्यप्रत्यक्षलक्षणान्तर्गतत्वात् । सांख्यप्रत्यक्षे नहीन्द्रियार्थसम्बन्धजनितं ज्ञानमेव प्रत्यक्षं किन्तु "यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम्" ( सांख्य० १।८९ ) अत्र केवलमिन्द्रियसम्बन्धसिद्धमेव न किन्तु यत्सम्बन्धसिद्धमुक्तं प्रत्यक्षं तच्चेन्द्रियैर्मनसा स्वात्मना च सम्बन्धसिद्धमपि भवति तथाकृत्वैव "योगिनामबाह्यप्रत्यक्षत्वान्न दोषः" ( सांख्य० १।९० ) "लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः" (सांख्य० १।९१) इति सूत्राभ्यां तत्प्रत्यक्षस्य विस्तृतस्वरूपं दर्शितं तेनेश्वरप्रत्यक्षत्वं सूक्ष्मवस्तुप्रत्यक्षत्वमपि भवति, तत्प्रत्यक्षात् खलु मोक्षलाभो युक्तः । एवमेवाणूनां तन्मात्राणां कार्यत्वप्रत्यक्षमपि भवति ॥८९॥

कार्याणां स्थूलसूक्ष्मभावेन द्विविधत्वात् तेषां परिमाणस्यापि द्वैविध्यमेव तद्बोधाय सांख्ये पर्याप्तमित्युच्यते—

न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥९०॥

(परिमाणचातुर्विध्यं न ) सांख्यमते कार्यमात्रस्य परिमाणचातुर्विध्यम्

'अणुमहद्ध्रस्वदीर्घत्वम्' न स्वीक्रियते नापेक्ष्यते ( द्वाभ्यां तद्योगात् ) यतो ह्यणुमहद्भ्यां परिमाणाभ्यां तद्योगस्तयोः सूक्ष्मस्थूलयोः सामान्य-विशेषयोः ❀ कार्ययोर्योगो युक्तत्वं सम्भवः-पर्याप्तत्वमस्ति ॥६०॥

सामान्यविशेषयोः कार्ययोर्विशेषस्य तु स्वत उपलब्धिर्भवति हि सामान्यस्य कथं स्यादित्युच्यते--

अनित्यत्वेऽपि स्थिरता योगात् प्रत्यभिज्ञानं सामान्यस्य ॥६१॥

(सामान्यस्य-अनित्यत्वे-अपि ) सामान्यं तन्मात्रं यद्यप्यनित्यं कार्यरूपमस्ति, तथापि ( स्थिरतायोगात् ) विशेषेषु पृथिव्यादिषु कार्येषु तस्य स्थिरतायोगः सम्बन्धोऽस्ति तेषु स्थिरत्वेन विद्यते, तस्मात् ( प्रत्यभिज्ञानम् ) विशेषं कार्यं दृष्ट्वा तथाभूतस्य सामान्यस्य कारणसामान्यस्य प्रत्यभिज्ञानं स्मृत्या ज्ञानं तु भवत्येव ॥६१॥

न तदपलापस्तस्मात् ॥६२॥

( तस्मात् तदपलापः-न ) तस्मात् तस्य सामान्यस्य तन्मात्रस्य पृथिव्यादिषु विशेषेषु कार्येषु वर्तमानस्यापलापोऽकथनमन्यथा कथनं न सम्भवति ॥६२॥

अथ च--

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥६३॥

(अन्यनिवृत्तिरूपत्वं न भावप्रतीतेः) अन्यत् तन्निवृत्तिरूपमन्यनिवृत्तिरूपं तस्य भावोऽन्यनिवृत्तिरूपत्वम् । विशेषात् कार्यात् पृथिव्यादेरन्यत्, तस्य विशेषस्य कार्यस्य पृथिव्यादिकस्य निवृत्तिरूपमभावरूपं सामान्यं स्यादिति न यतो भावप्रतीतेः, तस्य भावप्रत्ययाद् भावात्मकतया भासनात्, स्थूलं सूक्ष्मीभूतं सामान्यं सदपि भावात्मकत्वेनावतिष्ठते तस्याणुपरिमाणत्वात् ॥६३॥

यत्खलु विशेषेषु कार्येषु परस्परं सामान्याभासं रूपसामान्यं सादृश्यं तत्—

❀ 'विशेषाविशेषलिङ्गमात्रलिङ्गानि गुणपर्वाणि" (योग० २।१९) आकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः । इति व्यासः ।

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ।
निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् तदुप-
लब्धेः ॥९४—९५॥

(सादृश्यं तत्त्वान्तरं न प्रत्यक्षोपलब्धेः) विशेषेषु कार्येषु पृथिव्यादिषु पार्थिवादिषु वा यत्सामान्याभासं सादृश्यमस्ति तत्सांख्यमते तत्त्वान्तरं नास्ति न तत्सामान्यनाम्ना तत्त्वान्तरं मन्यते। कुतः प्रत्यक्षोपलब्धेः, प्रत्यक्षं विशेषस्य कार्यस्य पृथिव्यादिकस्य पार्थिवादिकस्य वा रूपसामान्यस्योपलब्धिर्भवति न विशेषात् पृथक् सत्ता तत्समाना काचिदस्ति, एकेन विशेषेण कार्यरूपेण सदृशोऽन्यो विशेषः कार्यरूपो रूपसामान्यगतः प्रत्यक्षमुपलभ्यते, न विशेषात् कार्यरूपाद् भिन्नः पदार्थः, यथा स स्थूलत्वकठोरत्वजडत्वरूपादिमान् तथैव द्वितीयोऽपि विशेषः पदार्थः (वा) अथवा विशेषेषु कार्येषु पृथिव्यादिषु पार्थिवादिषु च यत्सामान्याभासं रूपसामान्यं सादृश्यमस्ति (निजशक्त्यभिव्यक्तिः) तस्य तस्य विशेषस्य कार्यस्य पृथिव्यादेः पार्थिवादिकस्य च निजशक्तेरभिव्यक्तिरेव सा हि तत्स्वरूपेषु सदृशभावेन वर्तते (वैशिष्ट्यात् तदुपलब्धेः) विशिष्टं विशिष्टं कार्यं प्रति तस्या अभिव्यक्तेरुपलब्धिर्भवतीति हेतोर्विशेषस्य कार्यस्य निजशक्त्यभिव्यक्तिरेव सादृश्यं न तत्त्वान्तरम् ॥९४-९५॥

गतः सामान्यविचारोऽथ सम्बन्धविषये विचारः प्रवर्तते तत्र प्रथमं संज्ञासंज्ञिसम्बन्धविषये—

न संज्ञासंज्ञिसम्बन्धोऽपि ॥९६॥

(संज्ञासंज्ञिसम्बन्धः—अपि न) तत्त्वान्तरमिति वर्तते। संज्ञासंज्ञिसम्बन्धोऽपि तत्त्वान्तरं नास्ति। संज्ञा वाचको ध्वन्यात्मकत्वेन, संज्ञी वाच्यो वस्त्वात्मकत्वेन भवति, ताभ्यां वाच्यवाचकाभ्यां भिन्न उपलब्धसत्ताको न संज्ञासंज्ञिसम्बन्धोऽस्ति किन्तु तयोः संज्ञासंज्ञिनोरेवान्तर्वर्तमानाऽर्थशक्तिरेवसम्बन्धोऽस्ति न हि ताभ्यां पृथक्स्वरूपवान् ॥९६॥

पुनश्चैतादृशसम्बन्धस्यापि—

न सम्बन्धनित्यतोभयानित्यत्वात् ॥९७॥

(सम्बन्धनित्यता न—उभयानित्यत्वात्) एतादृशस्य वाच्यवाचकयोर्मध्ये वर्तमानस्यापि सम्बन्धस्य नित्यता नास्ति तयोरुभययोर्वाच्यवाचकयोरनित्यत्वात्, यतो वाच्यवाचकौ नित्यौ न स्तः। विशेषस्य कार्यस्य

वाच्यस्य न नित्यत्वमतस्तद्वाचकस्यापि न नित्यत्वं पुनस्तयोर्मध्ये वर्तमानस्य सम्बन्धस्यापि न नित्यत्वम् ॥९७॥

अथ नैसर्गिकसम्बन्धविषये—

नाजः* सम्बन्धो धर्मिग्राहकप्रमाणबाधात् ॥९८॥

( आजः सम्बन्धः–न ) अजयोः प्रकृतिपुरुषयोर्वर्तमानः सम्बन्धः खल्वाजो नैसर्गिकः स्वाभाविकः सम्बन्धो न सांख्यसिद्धान्ते स्वीक्रियते। यतः ( धर्मिग्राहकप्रमाणबाधात् ) सम्बन्धो धर्मः, सम्बन्धो धर्मोऽस्यास्तीति स धर्मी सम्बन्धधर्मी तौ धार्मिणौ तयोरजयोर्धर्मिणोः प्रकृतिपुरुषयोर्धर्मिणोर्ग्राहकप्रमाणस्य बाधनात् तयोर्धर्मित्वेन सम्बन्धधर्मित्वेन ग्राहकं प्रमाणं बाध्यते। न तथाभूतौ प्रकृतिपुरुषौ प्रमाणं साधयितुं समर्थम्। यतः प्रकृतिस्तु जडाऽचेतना च न सा पुरुषेण सह सम्बन्धस्थापनाय स्वतन्त्रा समर्था च तस्या जडत्वादचेतनत्वात्। पुरुषश्च नित्यशुद्धबुद्धमुक्तस्वभावः प्रकृत्या सह सम्बन्धस्थापनाय नाभिलाषवान् तस्य नित्यशुद्धबुद्धमुक्तस्वभाववत्त्वात्, तथा पुरुषो जीवात्मा न स्वभावतो बद्ध इति पूर्वतः प्रतिपादितत्वात् स्वभावतोऽपि प्रकृत्या सह तस्य सम्बन्धो न घटते। इत्थं सम्बन्धधर्मी न पुरुषस्तथा न सम्बन्धधर्मिणी प्रकृतिः, तयोः सम्बन्धधर्मित्वेन प्रमाणं न प्रवर्तते किन्तु बाध्यतेऽतो नैसर्गिकसम्बन्धो यद्वा स्वाभाविकसम्बन्धोऽपि न सांख्यसिद्धान्ते मन्यते। विज्ञानभिक्षुभाष्ये 'नाजः' इत्यस्य स्थाने 'नातः' पाठःकल्पितः स न युक्तः। सम्बन्धविचारप्रसङ्गस्तत्र संज्ञासंज्ञी सम्बन्धः पूर्वं गतः, अग्रे समवायसम्बन्धविचारः प्रवर्तिष्यमाणोऽस्ति, अत्र खल्वाजः सम्बन्धो नैसर्गिको नित्यः सम्बन्धो विचार्यते ॥९८॥

समवायसम्बन्धे च—

न समवायोऽस्ति प्रमाणाभावात् ॥९९॥

( समवायः न–अस्ति ) सांख्यसिद्धान्ते समवायसम्बन्धस्तत्त्वान्तरं न मन्यते ( प्रमाणाभावात् ) तत्साधनप्रमाणाभावात् ॥९९॥

कथं प्रमाणाभाव इत्युच्यते—

उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥१००॥

( उभयत्र–अपि ) कार्यकारणयोरपि सांख्यसिद्धान्ते सत्कार्यवादे

*'नाजः' पाठोऽनिरुद्धवृत्तेः 'नातः' विज्ञानभिक्षुभाष्यस्य

कारणस्य कार्याभिव्यक्तिधर्मवत्त्वात् कारणत्वं कार्यस्य कारणानुवर्ति-धर्मित्वात् कार्यत्वं खलु ( अन्यथासिद्धः ) प्रमाणमन्तरा-स्वतः सिद्धं स्वरूपतः सिद्धमस्ति । तस्मात् ( प्रत्यक्षम्-अनुमानं वा न ) तत्र प्रत्यक्ष-मथवाऽनुमानं प्रमाणं कार्यकारणाभ्यां भिन्नस्य समवायाख्यस्य तत्त्वा-न्तरत्वसाधकं न भवति, कार्ये भवति कारणं प्रत्यक्षं कारणाच्च कार्यस्य भवति खल्वनुमानं परन्तु ताभ्यां प्रत्यक्षानुमानाभ्यां तयोः कार्यकारणयोः समवायस्ताभ्यां कार्यकारणाभ्यां तत्त्वान्तरं सांख्यसिद्धान्ते नापेक्ष्यते न मन्यते न सिध्यति ॥१००॥

कारणस्य कारणत्वं कार्यस्य कार्यत्वं भवतु स्वरूपतः, ताभ्यां काय-कारणाभ्यां तत्त्वान्तरं समवायसम्बन्धो न स्यात् परन्तु कारणात कार्याभिव्यक्तिः क्रियया भवति किं सा क्रियाऽनुमानगम्या मन्तव्या ? यथा बीजादङ्कुरस्योत्पादनक्रियाऽनुमेया, इत्याकांक्षायामुच्यते—

नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवा-
परोक्षप्रतीतेः ॥१०१॥

( क्रियायाः—अनुमेयत्वम्—एव न ) क्रियायाः खल्वनुमेयत्वमेव न मन्तव्यं किन्तु प्रत्यक्षत्वमपि भवति, यतः ( नेदिष्ठस्य तत्तद्वतोः—एव—अपरोक्षप्रतीतेः ) निकटस्थस्य जनस्य क्रियाक्रियावतोः—क्रियायाः क्रियावतश्चैव प्रत्यक्षज्ञानाद् । यः खलु देशकालदृष्ट्या निकटस्थो भवति स क्रियां क्रियावति प्रत्यक्षमपि पश्यति, गच्छति पुरुषे गमनक्रियां पच्य-माने ह्योदने पचनक्रियां मृत्तिकातो निर्मायमाणे हि घटे निर्माणक्रियां साक्षात्पश्यति हि । देशकालव्यवहिता क्रिया खल्वनुमेया भवति ॥१०१॥

यत्र ह्यनुमेया क्रिया भवति तत्र कार्यात् कारणस्याप्यनुमानम्, तद्यथा—

न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥१०२॥

( शरीरं पाञ्चभौतिकं न ) शरीरं पाञ्चभौतिकं नास्ति, पञ्चभूतेभ्यो नोत्पन्नम् । यतः ( बहूनाम्—उपादानायोगात् ) बहूनां भूतानामेकस्मिन् कार्ये कार्याभिव्यक्तौ खलूपादानत्वयोगः परिणम्यमानयुक्तता नास्ति । अत्र वक्तव्यम्—तृतीयाध्याये "पाञ्चभौतिको देहः" [ १७ ], चातु-र्भौतिकमित्येके [ १८ ], ऐकभौतिकमित्यपरे [ १९ ] "इत्यत्र सूत्रत्रये शरीरस्य कारणविचारणायां चातुर्भौतिकविचारे 'एके' ऐकभौतिकविचारे

'अपरे' शब्दाभ्यां भिन्नमतप्रकाशनं कृतं किन्तु "पाञ्चभौतिको देहः" [ १० ] इति सूत्रे नान्यमतप्रकाशनसङ्केतः, इत्थं तु खलु तत्र पाञ्चभौतिकं शरीरमिति सांख्यमतं मनाक् कल्पयितुं शक्यते परन्तु "न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात्" अत्र प्रस्तुतसूत्रे पाञ्चभौतिकत्वं शरीरस्य निराक्रियते पुनः सांख्यमतं शरीरस्योपादानत्वे किमिति प्रश्नः समुपतिष्ठते तत्र चातुर्भौतिकत्वं तथैकभौतिकत्वं तु न सांख्यमतं कल्पयितुं युज्यते 'एके' 'अपरे' शब्दाभ्यां भिन्नमतप्रदर्शनात्। शरीरमनेकभूतेभ्यो निष्पन्नमिति सांख्यमतं तु ध्वन्यते "न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः" ( सांख्य० ३ । २० ) यथा विज्ञानभिक्षुभाष्येऽपि "भूतेषु पृथक् पृथक् कृतेषु चैतन्यादर्शनाद् भौतिकस्य देहस्य न स्वाभाविकं चैतन्यम्"। सूत्रे 'प्रत्येकादृष्टेः' पदेन शरीरमनेकभौतिकं तु सिद्धं भवति हि तत्र। अत्रोच्यते न पाञ्चभौतिकं शरीरम्। उभयप्रकरणालोचनया शरीरस्य कारणविषये सांख्यमतमस्तीदं यत्—शरीरमभिनिष्पन्नं तु पञ्चभूतेभ्यः "पाञ्चभौतिको देहः"इति कथनात् परन्तु तत्र पञ्चसु भूतेषूपादानत्वं परिणम्यमानत्वं न पञ्चभूतानाम् "बहूनामुपादानत्वायोगात्" तर्ह्येकस्य भूतस्योपादानत्वं परिणम्यमानत्वं भवति शरीररूपे कस्यैकस्येति प्रश्ने तु पृथिव्या एवोपादनत्वं परिणम्यमानत्वमस्ति तत्रान्येषां तूपष्टम्भकत्वं सहकारित्वमनिवार्यमेवेति सांख्यमतम्। उक्तं यथाऽतोऽग्रे हि "सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत्" (११२) पृथिवी ह्यसाधारणकारणं विशेषकारणं प्रधानकारणमुपादानकारणमन्यानि भूतानि तु साधारणकारणानि गौणकारणानि सहकारिकारणानीत्यर्थः, यथा घटस्योपादानकारणं मृत्तिका तत्र पिण्डीकरणे जलम्, पाकेऽग्निः, गतिव्यवहारे वायुः, अवकाशप्रदाने चाकाशः सहकारिकारणानि सन्ति। आहारनियमादपि तथेव प्रतीयते शरीरस्य स्थविष्ठत्वे स्थिरत्वे वृद्धौ च पार्थिव आहार एव प्राधान्येनापेद्यते जलाग्निवाय्वाकाशानां सम्पर्कोऽपि सूक्ष्मभावेन निमित्तं भवति ॥१०२॥

बाह्यस्थूलशरीरान्तरे सूक्ष्मशरीरमप्यस्तीत्याह—

न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥१०३॥

( स्थूलम्–इति नियमः–न ) स्थूलशरीरमेवास्तीति नियमः सिद्धान्तो न, यतः ( आतिवाहिकस्य–अपि विद्यमानत्वात् ) अतिवाहे–देहाद् देहान्तरप्राप्तौ निमित्तं यत् तदातिवाहिकं सूक्ष्मशरीरं तस्यापि

विद्यमानत्वमस्ति, नहि निराश्रयो जीवात्मा देहाद् देहान्तरं गन्तुमर्हः। उक्तं लिङ्गशरीरम् "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" (बृह० ४।४।६) ॥१०३॥

शरीरे हीन्द्रियाणि सन्ति, तानि प्राप्तं स्वस्वविषयं प्रकाशयन्ति यद्वाऽप्राप्तं प्रकाशयन्ति, दृश्यते खलूभयं प्राप्तप्रकाशनमप्राप्तप्रकाशनं च तेषाम्। यथा श्रोत्रं प्राप्तं समीपस्थं शब्दमपि प्रकाशयति दूरस्थमप्राप्तमपि प्रकाशयति, तथा नेत्रं प्राप्तं समीपस्थं रूपमपि प्रकाशयति दूरस्थमप्राप्तमाकाशीयं नक्षत्रतारकमपि प्रकाशयति तदत्र कः सिद्धान्तः। अत्रोच्यते—

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥१०४॥

(इन्द्रियाणाम्-अप्राप्तप्रकाशकत्वं न) इन्द्रियाणि न ह्यप्राप्तं प्रकाशयन्ति, यच्चाप्राप्तं दूरस्थं शब्दं रूपं वा प्रकाशयन्तीति प्रतीयते तन्न तथा, किन्तु तदपि विषयजातं प्राप्तमेव प्रकाशयन्तीति निश्चयः, इन्द्रियाणामतीन्द्रियत्वात् तदुक्तं पूर्वम् "अतीन्द्रियमिन्द्रियं···" (सांख्य० २।२३) न हि शरीरसंसक्तानि गोलकानीन्द्रियाणि, तस्मात् प्राप्तं हि विषयं प्रकाशयन्तीन्द्रियाणि तेषां शक्तिस्वरूपत्वात् (अप्राप्तेः सर्वप्राप्तेः-वा) यदि प्राप्तं न प्रकाशयेयुरिन्द्रियाणि तदा कस्मिंश्चिद् देशे काले वा प्राप्तस्य शब्दस्य रूपादिकस्य वा तस्मिन् देशे काले चाप्राप्तिर्भवेत्, भवति हि प्राप्तस्य प्राप्तिः। अथवा सर्वप्राप्तिर्भवेत् सर्वस्मिन् देशे काले च सर्वस्य विषयस्य प्राप्तिर्भवेत्, न च तथा भवति। तस्मात् प्राप्तप्राकाशकत्वमिन्द्रियाणामिति सिद्धान्तः ॥१०४॥

ननु चेदिन्द्रियाणि प्राप्तं प्रकाशयन्ति तर्हि चक्षुस्तु तैजसं भवेद् यद् दूरस्थं नक्षत्रादिकं प्रति सर्पति तत्प्राप्तु' तैजस एव पदार्थ किरणरूपेण दूरमपसरति पुनराहङ्कारिकत्वमिन्द्रियाणामिति कथम्। अत्रोच्यते—

न तेजोऽपसर्पणात् तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥१०५॥

(तेजोऽपसर्पणात्) तेजसोऽपसर्पणं तेजोऽपसर्पणमिति षष्ठीसमासः। तेजोविषयकमपसर्पणं भवति, अपसर्पणं तेजो धर्मस्तस्मात् (तैजसं चक्षुः-न) चक्षुस्तैजसं न मन्तव्यं यतः (वृत्तितः-तत्सिद्धेः) चक्षुषो वृत्तिद्वारेण दूरस्थं विषयं प्रत्यपसर्पणं भवति। भवन्ति हीन्द्रियाणां वृत्तयो याभिरिन्द्रियाणि दूरस्थमपि विषयं प्राप्नुवन्ति तत्समीपं सर्पन्ति, मनोऽपि त्वतैजसं सद् दूरमपसर्पति वृत्तिद्वारेण, सांख्यसिद्धान्ते मनोवदिन्द्रियाणामपि वृत्तयः स्वीक्रियन्ते, यथा मनसो वृत्तयस्तथेन्द्रियाणामपि वृत्तयो भवन्ती-

त्युक्तं हि पूर्वम् "क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः" (सांख्य० २।३२) ॥१०५॥

इन्द्रियाणां वृत्तिभिर्विषयप्राप्तिरुच्यते, वृत्तिसिद्धिः कथं भवतीत्युच्यते—

प्राप्तार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः ॥१०६॥

( प्राप्तार्थप्रकाशलिङ्गात्-वृत्तिसिद्धिः ) प्राप्तमर्थं प्रकाशयन्ति ज्ञापयन्तीति लिङ्गमनुमानं वृत्तिसिद्धौ यन्त्रस्य तारमिव ॥१०६॥

अथ किंस्वरूपा सेत्युच्यते—

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥१०७॥

( भागगुणाभ्यां तत्त्वान्तरं वृत्तिः ) सा खल्विन्द्रियवृत्तिः, इन्द्रियस्य न भागोंऽशो न च गुणो रूपादिवत् किन्तु भागगुणाभ्यां वस्त्वन्तरं भिन्नं वस्तु। यतः ( सम्बन्धार्थं सर्पति-इति ) दूरस्थमपि विषयं प्रति सम्बन्धार्थं सर्पतीति हेतोः, इन्द्रियं विहाय तद्भागो गुणो वा न दूरं सर्पितुं शक्तस्तत्स्थत्वाद् वृत्तिस्तु विद्युत्तरङ्गवद् दूरमपि सर्पति ॥१०७॥

ननु वृत्तिरिन्द्रियाणां भागगुणाभ्यां तत्त्वान्तरं तर्हि सा विशिष्टा क्रिया हि स्यात् पुनः क्रिया भवति द्रव्याश्रिता द्रव्ये हि व्यापृता न ततो बहिर्गमनशीलेति विप्रतिपत्तिर्निराक्रियते—

न द्रव्ये नियमस्तद्योगात् ॥१०८॥

( द्रव्ये नियमः-न ) द्रव्ये हि क्रियाऽवतिष्ठेतेति नियमो नास्ति, द्रव्येऽप्यवतिष्ठते व्याप्रियते क्रिया। किन्तु ( तद्योगात् ) द्रव्ययोगात् तद्बहिरपि दूरं क्रियाऽपसर्पति यथा सूर्यस्य तापक्रिया सूर्येऽपि स्थिता सती दूरं दूरतरं दूरतमं चापसर्पति तथेन्द्रियाणां वृत्तिरूपा विशिष्टा क्रिया दूरमप्यपसर्पति ॥ अन्यो व्याख्यामार्गः—( द्रव्ये नियमः-न ) क्रियाया द्रव्ये नियमो नास्ति, भवतु द्रव्ये क्रिया परन्तु यत्र द्रव्यत्वं तत्रैव क्रियेति नियमो न, किन्तु ( तद्योगात् ) क्रियायोगाद् द्रव्यत्वं भवति तेन क्रिया द्रव्यात् पृथगपि व्याप्रियते हि, उदाहरणं तु पूर्ववदेव यथा वाऽग्नेर्धूमगतिस्ततः पृथगपि प्रतीयते ॥ अथवा—

द्रव्ये हि क्रिया भवति तद्वृत्तौ कथमपसर्पणक्रियेत्यत्रोच्यते—

( द्रव्ये नियमः-न) द्रव्ये क्रियाया नियमो न, भवतु द्रव्येऽपि क्रिया परन्तु ( तद्योगात् ) क्रियायोगाद् वृत्तौ विद्युत्तरङ्गवत् क्रियेति निश्चयः,

यतो दूरस्थमपि विषयं प्राप्नोतीन्द्रियं स्ववृत्त्या क्रियावत्या तस्मान्न दोषः ॥१०८॥

तथाविधानां वृत्तिमतामिन्द्रियाणाम्—

न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः ॥१०९॥

( देशभेदे-अपि ) शरीरभेदेऽपि मनुष्येतरशरीरेऽपि ( अन्योपादानता न ) इन्द्रियाणां वृत्तिमतामहङ्कारातिरिक्तस्य भूतस्योपादानत्वं नास्ति किन्तु ( अस्मदादिवत्-नियमः ) अस्माकमिन्द्रियाणां यथाऽहङ्कार उपादानं तथैव तत्रापीन्द्रियाणामहङ्कारोपादानत्वनियमः ॥१०९॥

किन्तु—

निमित्तव्यपदेशात् तद्व्यपदेशः ॥११०॥

( निमित्तव्यपदेशात् ) इन्द्रियाणामुपष्टम्भकत्वनिमित्तानि भूतानि तथाविधनिमित्तव्यपदेशात् ( तद्व्यपदेशः ) भूतव्यपदेशो भवतु भौतिकानीन्द्रियाणीति, यथा दर्शनान्तरे "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" ( न्याय० १।१।१२ ) भवति हि निमित्ततोऽपि व्यपदेशस्तद्यथा "अन्नमयं हि सोम्य मनः" ( छान्दो० ६।५।४ ) यथा वा "यज्ञाद् भवति पर्जन्यः" (गीता० ३।१४) ॥११०॥

इन्द्रियाणामाहङ्कारिकत्वं शरीरभेदेऽप्युक्तमथेदानीं स शरीरभेदः प्रदर्श्यते यच्छरीरम्—

ऊष्मजाण्डजजरायुजोद्भिज्जं साङ्कल्पिकसांसिद्धिकं चेति न नियमः ॥१११॥

( ऊष्मजाण्डजजरायुजोद्भिज्जम् ) ऊष्मजं स्वेदजं दंशादिशरीरम्, अण्डजं पक्षिसरीसृपशरीरम्, जरायुजं मनुष्यादिगर्भादुत्पन्नं शरीरम्, उद्भिज्जं भूमेरुद्भेदनाज्जातं वृक्षादिकम् ( साङ्कल्पिकसांसिद्धिकं च ) चकारोऽप्यर्थः । साङ्कल्पिकं प्रारम्भसृष्टावार्षं शरीरमग्न्यादीनां वेदप्रकाशकमहर्षीणाम्, सांसिद्धिकं स्वतः सिद्धं नैसर्गिकमादिसृष्टामवथुनसम्भवं शरीरमपि, साङ्कल्पिकसांसिद्धिकभेदद्वयेनापि शरीरं भवतीत्यर्थः । सांसिद्धिकं स्वतः सिद्धं नैसर्गिकम्, यथा "न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः" ( सांख्य० ३।२० ) परन्तु ( इति नियमः-न ) इति षाड्विध्यस्य नियमो नास्ति सर्वदा सर्वत्र षड्विधानि शरीराणि भवेयुः, साङ्कल्पिक-

सांसिद्धिके तु खल्वारम्भसृष्टावेव भवतः । चातुर्विध्यस्यैव प्रवर्तनं तथैव प्रतिपादनमन्यत्र शास्त्रे न विरुध्यते ॥१२१॥

तत्र—

सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः
पूर्ववत् ॥११२॥

( सर्वेषु पृथिवी–उपादानम् ) सर्वेषु षड्विधशरीरेषु पृथिवी खलूपादानं भवति ( असाधारण्यात् ) वैशेष्याद् विशिष्टत्वात् पृथिव्याः, अत एव षड्विधमपि शरीरं पार्थिवम् । अथ साधारण्यात् ( तद्व्यपदेशः पूर्ववत् ) पाञ्चभौतिकव्यपदेशः "पाञ्चभौतिको देहः" ( सांख्य० ३।१७ ) पूर्ववद् भवति "निमित्तव्यपदेशात् तद्व्यपदेशः" ( ११० ) इति पूर्वोक्तसूत्रप्रकारात् पञ्चभूतनिमित्तत्वात् पञ्चभूतानि शरीरस्य निमित्तानि तु सन्त्युपष्टम्भकत्वात्तेषां तस्मादेव पाञ्चभौतिको देह उच्यते तत्रोपादानत्वं तु पृथिव्या एव ॥११२॥

इन्द्रियाणामुत्पत्तिरहङ्कारादुक्ता शरीरं च पार्थिवं तस्य पृथिव्युपादानकत्वात् तथा पाञ्चभौतिकं शरीरं निमित्तव्यपदेशात् तत्र पञ्चतभूतनिमित्तसद्भावात् पुनः प्राणः किंस्वरूपः किम्प्रकृतिकश्चेत्यत्रोच्यते—

न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥११३॥

( देहारम्भकस्य प्राणत्वं न ) देहारम्भकस्योपादानत्वेन पृथिवीरूपभूतस्य निमित्तत्वेन भूतपञ्चकस्य तन्मध्यादेकस्य वायोर्वा प्राणत्वं प्राणरूपे परिणम्यमानत्वं नास्ति । वायुना प्राणः सन्दिह्यते तथा कृत्वैव वेदान्तदर्शनेऽपि प्राणस्य वायुविकारत्वं निषिध्यते "श्रेष्ठः [ प्राणः ] न वायुक्रिये पृथगुपदेशात्" ( वेदान्त० २।४।८,९ ) किन्तु ( इन्द्रियशक्तितः–तत्सिद्धेः ) इन्द्रियाणां शक्तितः प्राणसिद्धिरर्थादिन्द्रियाणां शक्तिः शक्तिरूपः शक्तिप्रदः प्राणः । उच्यते यथा" प्राण···या ते तनुर्वाचि प्रतिष्ठिता या श्रोत्रे या चक्षुषि या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः" ( प्रश्नो० २।१२ ) अत एवेन्द्रियाणि प्राणा उच्यन्ते "अथ ह प्राणा अहंश्रेयसि व्यूदिरे···सा ह वागुच्चक्राम···चक्षुर्होच्चक्राम···श्रोत्रं होच्चक्राम" ( छान्दो० ५।१।६-७ ) इन्द्रियाणि हि न भौतिकानि तान्याहङ्कारिकाणि तस्मात् प्राणो न भौतिकोऽपित्वभौतिकः सः, उच्यते हि भूतेभ्यः पूर्वं तस्योत्पत्तिः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्यो-

तिरापः पृथिवी" ( मुण्डको० २।१।३ ) स एष इन्द्रियशक्तिप्रदः प्राणोऽभौतिको जीवात्मनो जीवनधर्मः। उक्तं हि "आत्मन एष प्राणो जायते" ( प्रश्नो० ३।३ ) यदा हि जीवात्मा शरीरे प्रविशति तदैव प्राणोऽपि प्रादुर्भवति, उत्क्रान्ते जीवात्मनि प्राणोऽप्युत्क्रामति "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमुत्क्रामन्तं सर्वे प्राणा [ इन्द्रियाणि ] अनूत्क्रामन्ति" ( बृह० ४।४।२ )। अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये च सूत्रविरुद्धं व्याख्यानं कृतम्। सूत्रे तु देहारम्भकस्य प्राणत्वनिषेधः किन्तु तत्र प्राणस्य देहारम्भकत्वनिषेधः कल्पितः "देहे प्राणदर्शनात् तस्य देहारम्भकत्वशङ्कामपनयति" ( अनिरुद्धः ) "प्राणस्य देहारम्भकत्वनिरसनम्" ( विज्ञानभिक्षुः ) ॥११३॥

प्राणस्याभौतिकत्वे जीवात्मधर्मत्वे सति भवति जीवात्मना सहैव तस्यापि शरीरे प्रवेशः, प्राणो हि भोक्तुर्जीवात्मनोऽधिष्ठानमाश्रयो वा यथा वेदान्तदर्शने निर्दिष्टम् "प्राणवता शब्दात्" ( वेदान्त० २।४।१५ ) तदा तस्य प्राणस्य शरीरे विशिष्टं कार्यं प्रदर्श्यते—

भोक्तुरधिष्ठानाद् भोगायतननिर्माणमन्यथा पूतिभावप्रसक्तिः (प्रसक्तेः ?) ॥११४॥

( भोक्तुः—अधिष्ठानात् ) भोक्तुर्जीवात्मनोऽधिष्ठानादाश्रयभूतात् प्राणात् प्राणसञ्चाराज्जीवनसञ्चारात् ( भोगायतननिर्माणम् ) भोगायतनस्य शरीरस्य निर्माणं भवति, शरीरं हि भोगायतनम् (अन्यथा पूतिभावप्रसक्तिः ) अन्यथा शुक्रशोणितयोस्तन्निष्पन्नशरीरपिण्डस्य च पूतित्वं गलितत्वं प्रसज्यते शववद्दूषितं भवेत् तन्निर्माणं न स्यादित्यर्थः ॥११४॥

ननु प्राणस्तु शरीरे प्रविशति जीवात्मना साकमेव पुनः प्राणः कथं तस्याधिष्ठानं कल्प्यते स एव जीवात्मा स्वचैतन्यस्वरूपेण शरीरे जीवनसञ्चारं कुर्यात्।

अत्रोच्यते—

भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥११५॥

( स्वाम्यधिष्ठितिः-भृत्यद्वारा-एकान्तात्-न ) जीवात्मा स्वामी प्राणस्तदधीनो भृत्यः, यथा हीन्द्रियाणि जीवात्मनो भृत्यरूपाणि तानि स्वस्वैकैकविषयप्रदर्शनकार्यं परिपालयन्ति तथैव प्राणस्तस्य भृत्यरूपः शरीरे

जीवनसञ्चारकार्यं सम्पादयति यतः स्वामिनोऽधिष्ठातृत्वं भृत्यद्वारा हि भवति न साक्षात् तस्माज्जीवनसञ्चारः प्राणस्यैव कार्यं न जीवात्मनः, तस्मान्न दोषः ॥११५॥

परन्तु यदा जीवात्मा भोक्तृत्वं त्यजति तदा स कस्यामवस्थायां किंरूपोऽवतिष्ठत इत्याकांक्षायामुच्यते—

समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥११६॥

( समाधिसुषुप्तिमोक्षेषु ) जीवात्मा भोक्तृभावाद्वियुक्तः समाधौ सुषुप्तौ मोक्षे चावतिष्ठते तदा स समाहितः सुषुप्तो मुक्तो वा भवति, तदा तस्य ( ब्रह्मरूपता ) ब्रह्मगुणसमापन्नता भवति, सांसारिकसुखदुःखे न तदा भवतः । अत्र विज्ञानभिक्षुभाष्ये ब्रह्मरूपताविषये लिखितं यत् "अस्मच्छास्त्रे ब्रह्मशब्द औपाधिकपरिच्छेदमालिन्यादिरहितपरिपूर्णचेतनसामान्यवाची न तु ब्रह्ममीमांसायामिवैश्वर्योपलक्षितपुरुषमात्रवाचीति विवेक्तव्यम्" ( विज्ञानभिक्षुः ) भवत्विदं विज्ञानभिक्षुमतं न तु सांख्यसूत्रकारमतम्, न हि सांख्यसूत्रमेतादृशमुपलभ्यते यस्मिन् ब्रह्मलक्षणं सूचितं भवेत्, यदि ह्यनेन सूत्रेण लक्ष्यमिदं स्यात् तर्हि "समाधिसुषुप्तिमोक्षेषु स्वरूपता" इति सूत्रेण भाव्यम्, 'ब्रह्मरूपता' इत्यस्य स्थाने 'स्वरूपता' पदं स्यात् । परन्तु पश्यति त्वाचार्यो न तदानीं ब्रह्मता स्वरूपता भवतीति कृत्वा 'ब्रह्मरूपता' इति पदेन वर्णयति । अनिरुद्धवृत्त्याऽपि विज्ञानभिक्षुमतं न पुष्यते किन्तु खण्ड्यते "ब्रह्मणा सह तुल्यरूपता" ( अनिरुद्धः ) लोकेऽपि प्रत्यक्षमुपलभ्यते यत् सुषुप्तौ पुरुषस्य चैतन्यं न प्रतिभासते तदानीं तु स स्वचैतन्यानभिज्ञः सन् ब्रह्मणि निमग्नो ब्रह्मतुल्यो निष्प्रपञ्चो भवति । अथ स्वस्मिन् शास्त्रे यद्विषये परिभाषा लक्षणं वा न क्रियते तत्र शास्त्रान्तरे कृता परिभाषा लक्षणं वाऽभिप्रेयते । अतोऽयुक्तं विज्ञानभिक्षुमतम् ॥११६॥

तत्र ब्रह्मरूपतायास्तिसृषु खल्ववस्थासु भेदः प्रदर्श्यते—

द्वयोः सबीजत्वमन्यस्य तद्धतिः ॥११७॥

( द्वयोः सबीजत्वम् ) द्वयोः प्राथमिकयोः समाधिसुषुप्त्योर्भोक्तृभावस्य बीजत्वमस्ति सशरीरत्वात् तयोरवस्थयोः, पुनर्व्युत्थाने जागरणे च भोगमनुवर्तते हि जीवात्मा, तस्य तदा सशरीरत्वात्, परन्तु ( अन्यस्य तद्धतिः ) समाधिसुषुप्तिभ्यामन्यस्य मोक्षस्य भोक्तृत्वबीजभावनाशो भवति तत्र जीवात्मनोऽशरीरत्वादेष तत्र भेदः ॥११७॥

समाधिसुषुप्ती तु प्रत्यक्षं दृश्येते तयोः शरीरे वर्तमानत्वात् परन्तु मोक्षस्तु न दृश्यते तयोरेव भवतु कृतकृत्यता । अत्रोच्यते—

द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ॥११८॥

( द्वयोः-इव त्रयस्य-अपि दृष्टत्वात् ) समाधिसुषुप्त्योरिव तृतीयस्य मोक्षस्यापि भवतु कृतकृत्यता । 'त्रयस्येत्यार्षप्रयोगः' दृष्टत्वाच्छास्त्रदृष्टत्वात् खलु ( न तु द्वौ ) न तु द्वे एव तृतीयो मोक्षोऽपि भवति तथा च मोक्षवद् दुःखातीते न ते द्वे समाधिसुषुप्ती समे वा कृतकृत्यतायाम्, तस्मान्न ताभ्यां कृतकृत्यता तथा शास्त्रं च "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( यजु० ३१।१८ ) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (मुण्डको० ३।३।३) "भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" ( केनो० २।१३ ) "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" ( छान्दो० ६।१४।२ ) ॥११८॥

सुषुप्तिसमाधिमोक्षेषु मोक्षस्योत्कृष्टतमत्वमुक्तं तस्य च ताभ्यां भेदोऽपि दर्शितः, अधुना सुषुप्तिसमाध्योः समाधेरुत्कृष्टतरत्वमुच्यते सुषुप्तितः समाधिवैशिष्ट्यं प्रदर्श्यते यदभ्यासवैराग्याभ्यां लब्धसमाधिर्भवति जीवन्मुक्तो जीवन् सन् मुक्तो न तु नितान्तमुक्तस्तस्य सशरीरत्वात्, स च चरमदेहो यावद्देहस्तावद्दोषयोगः क्लेशकर्मयोगवान् भोगारूढश्चक्रभ्रमणवद् धृतशरीरो नानर्थभाग् भवति "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" ( छान्दो० ६।१४।२ ) इत्येवाह—

वासनयाऽनर्थख्यापनं+ दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥११९॥

( वासनया-अनर्थख्यापनम् ) वासनया खल्वनर्थप्रदर्शनं भवति, अभ्यासवैराग्याभ्यां लब्धसमाधिकस्य चरमदेहस्य जीवन्मुक्तस्य वासना नावतिष्ठते तस्य चरमदेहस्य वासनाऽभावात् ( दोषयोगे-अपि न ) क्लेशकर्मयोगे भोगारूढस्यापि नानर्थप्रदर्शनं भवति, यतस्तथाभूतस्य चरमदेहस्य योगिनः पुण्यपापकर्मजातिर्न विद्यते, उक्तं हि "अशुक्लकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति" ( योग० ४।७ व्यासः ) ( निमित्तस्य प्रधानबाधकत्वम् ) दोषाणां क्लेशकर्मादीनां निमित्तं वासना वासनया हि

+ 'वासनयाऽर्थख्यापनं' (अनिरुद्धः) 'वासनया न स्वार्थख्यापनं' (विज्ञानभिक्षुः)

ते प्रवर्धन्ते वासनारूपस्य निमित्तस्य प्रधानबाधकत्वं मोक्षे भवति, वासनारूपनिमित्ताभावात्तस्य लब्धसमाधिकस्य जीवन्मुक्तस्य नानर्थदर्शनं भवति, सुषुप्तिगतस्य तु सुषुप्तेरनन्तरं भवत्येवानर्थदर्शनं वासनाया विद्यमानत्वात्। तस्मात् सुषुप्तितः समाधिरुत्कृष्टतरा तत्र ब्रह्मसम्पत्तिश्चाप्युत्कृष्टतरा सस्वात्मबोधा ॥११९॥

उच्यते हि वासनयाऽनर्थख्यापनम्, सा च वासना जीवन्मुक्तस्य नास्तीति न युक्तं यतो वासना संस्कारः, संस्कारादेव जीवन्मुक्तस्य चरमदेहस्य भोगक्रियाऽन्तिमा कथ्यते परन्तु क्रियासन्तानात् संस्कारसन्तानः प्रवर्तते इत्थमेकैकां क्रियां प्रति नवीन एकैकः संस्कारः प्रवर्तेत तेन लब्धसमाधिकस्य जीवन्मुक्तस्यापि संस्कारापत्तिर्वासनाप्रसक्तिः स्यात्। अत्रोच्यते--

एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥१२०॥

( एकः संस्कारः क्रियानिर्वर्तकः ) एको हि संस्कारः क्रियां निर्वर्तयति यावत्क्रियासमाप्तिः क्रियासन्तानसमाप्तिर्वा स एवैकः संस्कारः प्रवर्तते ( न तु प्रतिक्रियं संस्कारभेदाः ) न हि प्रतिक्रियं प्रतिक्रियासन्तानं भिन्नभिन्नः संस्कारो नवो नवः संस्कारः समुद्भवति ( बहुकल्पनाप्रसक्तेः ) क्रियासंस्कारयोः पौनःपुन्येन बहुकल्पनाप्रसङ्गो भवेत्, न तदा तत्कल्पनासमाप्तिर्भवेत्। अतः स लब्धसमाधिको जीवन्मुक्तश्चक्रभ्रमणवद् धृतशरीरः पूर्वसंस्कारलेशतो भोगक्रियामनुतिष्ठन् न पुनः संस्कारवशगो भवति तस्य तदन्तिमभोगक्रिया संस्कारलेशतः प्रवृत्ता संस्कारलेशतो भोगः समाप्यते, यथा कुलालचक्रं वेगरूपसंस्काराद् भ्रमति संस्कारलेशान्नाग्रे पुनः संस्कारसम्भवः। उक्तं यथा "नापनीतक्लेशः 'कर्माशयः' कर्मसंस्कारः प्ररोहसमर्थः" ( योग० २। १३ व्यासः ) तस्मात्सुषुप्तिमतः समाधिमान् तूत्कृष्टतरः ॥१२०॥

मोक्षे तु स्याज्जीवात्मनो भोक्तृत्वाभावस्तस्य स्वरूपनिष्ठत्वात्, समाधौ भोक्तृत्वाभावो भवेद् भोक्तृबुद्धेर्निरुद्धत्वात्, सुषुप्तौ भोक्तृत्वाभावो गाढनिद्रयाऽभिभूतत्वात्, अनेन बाह्यबुद्धिर्भोक्तृत्वसाधिकेति गम्यते तर्हि यदुद्भिज्जं शरीरं निर्दिष्टं तत्र बाह्यबुद्धेरभावोऽस्ति तेन तत्र भोक्तृत्वं न सिध्यति, भोक्तृत्वाभावाच्छरीरत्वमपि न सेत्स्यतीत्याशङ्कायामाह--

न बाह्यबुद्धिनियमः ॥
वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि
भोक्तृभोगायतनत्वं पूर्ववत् ॥१२१-१२२॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति--

( बाह्यबुद्धिनियमः-न ) भोक्तृत्वे बाह्यबुद्धेर्नियमो नास्ति, भवति बाह्यबुद्ध्याऽपि भोक्तृत्वं परन्तु तत्र न नियमः, यतो बाह्यबुद्धिमन्तरेणापि खल्वन्तर्बुद्ध्या भोक्तृत्वं भवति हि ( वृक्षगुल्मलतौषधिवनस्पतिवीरुधादीनाम्-अपि भोक्तृभोगायतनत्वं पूर्ववत् ) वृक्षादीनामुद्भिज्जशरीराणामन्तःसंज्ञानामपि जीवात्मभोगायतनत्वमस्ति पूर्ववदूष्मजादिजङ्गमशरीरवत् ॥१२१-१२२॥

तदेतद् वृक्षादीनां भोक्तृभोगायतनत्वमन्तःसंज्ञत्वं च--

स्मृतेश्च ॥१२३॥

( स्मृतेः-च ) स्मृतेश्च श्रुतेश्च सिध्यति । श्रुतिस्तावत् "सूर्यं चक्षुर्गच्छतु वातमात्मा दिवं च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठ शरीरैः" ( ऋ० १०।१६।३) "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" ( कठो० २।५।७ ) "अस्य महतो वृक्षस्य यो मूले···यदेकां शाखां जीवो जहात्यथ सा शुष्यति···सर्वं जहाति सर्वः शुष्यति···जीवापेतं किलेदं म्रियते न जीवो म्रियते" ( छान्दो० ६।११।१-३ ) स्मृतिः खल्वपि "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।" ( मनु० १२।६ ) सूत्रे स्मृतिनिर्देशस्य प्राधान्यम् 'श्रुतेश्च' इत्येतेन सूत्रेणापि भवितव्यमासीत् । परन्तु 'न बाह्यबुद्धिनियमः' इति कथनस्य प्राधान्यात् स्मृतिकथनप्राधान्यमत्र यतस्तत्र वृक्षादीनामन्तर्बुद्धित्वं स्पष्टं विहितम् "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" ( मनु० १।४६ ) ॥१२३॥

वृक्षादयो जीवानां देहास्तत्र च तेऽन्तःसंज्ञाः पुनस्तैः कथं कर्माण्यनुष्ठातव्यानि, कर्माणि तु बहिः संज्ञया सम्पद्यन्ते-इत्याकांक्षायामुच्यते—

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥१२४॥

( देहमात्रतः कर्माधिकारित्वं न ) देहमात्रत एव कर्माधिकारित्वं कर्मानुष्ठायित्वं कर्मविधानं नास्ति । यतः ( वैशिष्ट्यश्रुतेः ) विशिष्टत्वश्रवणात् , न हि सर्वप्राणिनां कर्मविधायिका श्रुतिः । किन्तु "कुर्वन्नेवेह

कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥" ( यजु० ४०।२ ) नरस्य-मनुष्यस्य कर्मविधायिका श्रुतिरस्ति । तस्मान्न दोषो वृक्षादीनामन्तःसंज्ञत्वात् कर्माभावे, नहि वृक्षादिषु कर्मापेक्षा ते तु भोगदेहा एव ॥१२४॥

यतो हि—

त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥१२५॥

( त्रिधा व्यवस्था ) त्रिप्रकारा व्यवस्था देहविषये सा चेत्थं यत् ( त्रयाणां कर्मदेहोपभोगदेहोभयदेहाः ) साङ्कल्पिकशरीरवतां वेदप्रकाशकमहर्षीणामग्न्यादीनां कर्मदेहः, नहि ते भोगाय प्रादुर्भूताः किन्तु वेदप्रकाशनं हि तेषां कर्म तस्मात् ते कर्मदेहाः । मनुष्येतराणां पशुपक्ष्यादीनां प्राणिनामुद्भिज्जानां वृक्षादीनां चोपभोगदेहस्तेषां कर्माचरणासम्भवात् । विधिनिषेधदृष्ट्या पुण्यपापकर्मानुष्ठानासम्भवात् ते तूपभोगदेहाः । मनुष्याणामुभयदेहः कर्मभोगदेहास्ते कर्मापि कुर्वन्ति भोगञ्चानुतिष्ठन्ति, तस्मान्मनुष्याः कर्मोपभोगदेहाः ॥१२५॥

किन्तु —

न किञ्चिदप्यनुशयिनः ॥१२६॥

( अनुशयिनः किञ्चित्-अपि न ) अनुशयः पुनर्जन्मार्थपुण्यपापसंस्कारस्तथा परशरीरावेशपराक्रमश्च यस्यास्तीति सोऽनुशयी तस्य किञ्चदपि तद्देहे कर्म वा भोक्तव्यं वा नास्ति यतो न स तद्देहाभिमानी स तु तत्रानुशयी । अनुशयी भवति द्विविधः, एकस्तु वृक्षादिषु स्थावरयोनिषु तथाऽन्यो मनुष्यादिषु जङ्गमयोनिषु । यस्तु वृक्षादिषु भवत्यनुशयी स तु परतन्त्रः स्वकर्मानुसारेणानुशयवान् सन् चन्द्रलोकादावृत्य वृक्षादिष्वनुशेते । उक्तं यथा "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ( वेदान्त० ३।१।८ ) "अन्याधिष्ठितेषु पूर्ववदभिलापात्" ( वेदान्त० ३।१।२४ ) "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ··· ते पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्रूप एव भवति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ···" (छान्दो० ५।१०।२-७ ) ते एतेऽनुशयिनो वृक्षादिषु खल्वनुशयाना वृक्षादीनामन्तः-

संज्ञया भोगमनुतिष्ठतां तद्भोगेन सम्पर्करहितास्तत्र एवानुशेरते न तेषां भोगस्तत्र भवति तत्र तु तेषां यात्रामात्रमेव । अन्योऽनुशयी भवति योगी यः परदेहावेशपराक्रमवान् भवति स परदेहेऽनुशेते परदेहे प्रविशति । उक्तं हि योगदर्शने "बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः" ( योग० ३।३८ ) तथाविधस्य परशरीराविष्टस्यानुशयिनो योगिनस्तच्छरीरवर्ति न कर्म न च भोक्तव्यं तत्र परशरीरे भवति तच्छरीरस्थकर्मभोगाभ्यां स न सम्पृच्यते तत्र तु तस्य योगकौतूहलप्रदर्शनमेव ॥१२६॥

तस्यानुशयिनः कुतो न भोगादिरित्युच्यते—

न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥१२७॥

( आश्रयविशेषे–अपि ) अनुशयिनः पुनर्जन्मप्राप्तये वृक्षादिष्वभिनिविष्टस्य जीवस्य तथा योगसिद्ध्या परशरीरे प्रविष्टस्य योगिनोऽनुशयिनः खल्वाश्रयविशेषे भोगमये भोगकर्ममये च भोगादिकमित्थं न सम्भवति । यतः (बुद्ध्यादिनित्यत्वं न) भोगादिकं तु भवति बुद्ध्यादिभिर्बुद्ध्यहङ्कारमनोज्ञानेन्द्रियकर्मेन्द्रियैरात्मोपकरणैर्नह्येतैर्विना भोगादिकं सम्भवति बुद्ध्यहङ्कारमनोज्ञानेन्द्रियकर्मेन्द्रियाणां न नित्यत्वं न ह्येतानि नित्यानि, नहि सर्वदाऽऽत्मना सह तथैव व्यक्तत्वेनाभिसम्बध्यन्ते व्यक्तभावेनोपकरणत्वं भजन्ते किन्त्वनभिव्यक्तरूपाणि ( वह्निवत् ) यथा ह्यग्निराश्रयविशेषेऽप्यनभिव्यक्तः सन् न दहनादिकार्यं कर्तुं समर्थो भवति यावत् तस्य दाहकधर्मो नाभिव्यक्तो भवेत् ॥१२७॥

अपरो हेतुरत्रैव—

आश्रयासिद्धेश्च ॥१२८॥

( आश्रयासिद्धेः–च ) चकारो हेत्वन्तरसमुच्चयार्थः । यः खल्वनुशयिन आश्रयो वृक्षादिर्वा परदेहो वा तस्यासिद्धेरसिद्धत्वात् सदातनायानाश्रयत्वात् स्थिराश्रयत्वाभावात्, स तु खल्वाश्रयः पुनर्जन्मप्रयोजनाय यात्रामात्रमथ योगिनः परशरीरावेशश्च योगलीलामात्रं योगक्रीडाप्रदर्शनार्थं योगकौतूहलप्रदर्शनार्थम् । तथा पुनर्जन्मार्थो वृक्षाद्य आश्रयोऽसिद्धः स्वत एवोपकरणरहितः योगसिद्धये च परदेहोऽप्यसिद्धोऽशक्त उपकरणशक्तिहीनस्तादृशो देहे योगिनः प्रवेशस्य योगकौतूहलं भवति ॥१२८॥

अनुशयिनो योगिनः परशरीरप्रवेशो नाशङ्कनीयो नासम्भव इत्याह—

योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥१२९॥

( योगसिद्धयः–अपि न–अपलपनीयाः ) योगसिद्धयः संयमसिद्धयः "बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः" ( योग० ३।३८ ) परशरीरावेशादिसिद्धयोऽपि न तिरस्कार्याः किन्तु स्वीकार्या मन्तव्याः सन्ति (औषधादिसिद्धिवत् ) यथा हि "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" ( योग० ४।१। ) इति सूत्रे खल्वोषधिमन्त्रतपोजाः सिद्धयो यथा स्वीक्रियन्ते मन्यन्ते तथैव समाधिसिद्धेरपि सूत्रे प्रतिपादनाद् योगिनः परशरीरावेशादिसिद्धयोऽपि स्वीकार्या मन्तव्याः सन्ति न निषेध्याः । अत्र विज्ञानभिक्षुभाष्ये "ईश्वराभावेऽपि योगशक्त्या सृष्टिकर्तृत्वसम्भवोऽस्ति" इति कथनमनर्गलमेव, सृष्टावेव योगिसम्भवः पुनस्तद्द्वारा सृष्टिरचनं प्रलापमात्रं न च योगसूत्रेषु क्वचिदप्येतदुपलभ्यते ॥१२९॥

तत्रैतेषु प्रकृतेषु देहेषु—

न भूतचैतन्यं प्रत्येकानुपलब्धेः सांहत्ये च सांहत्ये च+ ॥१३०॥

( सांहत्ये च भूतचैतन्यं न ) अथ च भूतानां सांहत्ये सति खलु ये देहा अभिनिष्पन्नास्तत्र देहेषु यच्चैतन्यं तद् भूतचैतन्यं भूतानां चैतन्यं नास्ति । यतः ( प्रत्येकानुपलब्धेः ) प्रत्येकस्मिन् पृथक्पृथग्भूते चैतन्यं नोपलभ्यते तस्मात् , यः खलु धर्मोऽल्पोऽप्यवयवे न विद्यते स न समुदायेऽभिव्यज्यते । तस्मात् तत्र देहे चैतन्यं चेतनस्यात्मन इति मन्तव्यम् । "न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः" (सांख्य० ३।२० ) इत्युक्तत्वादप्यत्र पुनः कथनं प्रसङ्गपूर्त्यर्थं तथाग्रे च "अस्त्यात्मा···" ( सांख्य० ६।१) ) आत्मप्रसङ्गोत्थापनार्थं यद् यस्य हि देहे चैतन्यं स देहादतिरिक्तो भूतेभ्योऽनभिनिष्पन्नश्चेतन आत्माऽस्तीति कृत्वा न पुनरुक्तिर्दोषावहा । सांहत्ये च सांहत्ये च द्विः कथनमध्यायपरिसमाप्त्यर्थम् ॥१३०॥

सांख्यदर्शने समाप्तः पञ्चाध्यायः स्वामिब्रह्ममुनिभाष्योपेतः



+'सांहित्ये च' अनिरुद्ध पाठः । विज्ञानभिक्षोस्तु 'सांहत्येऽपि च' ।

# षष्ठोऽध्यायः

अस्त्यात्मा नास्तित्वसाधनाभावात् ॥१॥

( आत्मा-अस्ति ) गतानन्तराध्यायस्यान्तिमसूत्रेण देहे चैतन्यस्य भूतसम्भवत्वं निराकृतं तर्हि कस्य चैतन्यमित्यत्र सूत्रे वर्ण्यते यद् देहेऽस्ति ह्यात्मा यस्य चैतन्यं तत्र वर्तते, देहे चैतन्यस्य वर्तमानत्वात्तत्रात्माऽस्तीति प्रसङ्ग उत्थाप्यतेऽत्र यतो देहेऽस्ति ह्यात्मा ( नास्तित्वसाधनाभावात् ) आत्मनो नास्तित्वस्य साधनाभावोऽस्तीत्यतः । आत्मनो हि चैतन्यं स्वरूपम्, न हि किमपि साधनं येनाहमित्यात्मभावः स्वचैतन्यरूपो निराक्रियेत ॥१॥

अथ च—

देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥२॥

( असौ देहादिव्यतिरिक्तः ) स च देहे सन्नपि देहान्तःकरणेन्द्रियेभ्यः स्वरूपतो भिन्नोऽस्ति । कुतः ( वैचित्र्यात् ) विलक्षणत्वात्, देहस्तु बाल्यकौमार्ययौवनवार्धक्यपरिणाममादत्ते बाल्याद्यवस्थासु परिणमते न तथात्मा स तु सर्वास्वप्यवस्थासु किलाहमिति प्रत्ययेन तथैवावतिष्ठते, अन्तःकरणेन्द्रियाणां वैकल्येऽप्यहमित्यनुभूतिस्तथैवोपतिष्ठते । मृते देहे रूपस्पर्शादिधर्मा अपि वर्तन्ते किन्तु तद्विलक्षणाः स्फूर्तिभाषणमननबोधादय आत्मधर्मा नोपलभ्यन्ते ये खलु जीवद्देहे ह्यवतिष्ठन्ते, मृते देहे जीवति देहे च बाह्यधर्मसाम्येऽपि जीवद्देहे स्फूर्तिभाषणमननबोधादिकं धर्मवैलक्षण्यमात्मानं साधयति ॥२॥

हेत्वन्तरमुच्यते—

षष्ठीव्यपदेशादपि ॥३॥

( षष्ठीव्यपदेशात्-अपि ) षष्ठ्या सम्बन्धव्यवहारादपि देहादिभ्यो भिन्न आत्मा सिध्यति, यत्—मम देहः, मम मनः, मम चक्षुः "उत स्वया तन्वा संवदे···" (ऋ० ७।८६।२) "तन्मे मनः शिवसङ्कल्पमस्तु" (यजु० ३४।१) "चक्षुर्मे पाहि" ( यजु० २।१६ ) इत्यादिभेदव्यवहारस्तद्भिन्नमात्मानं द्योतयति ॥३॥

अत्र शङ्कयित्वा समाधत्ते—

न शिलापुत्रवद् धर्मिग्राहकमानबाधात् ॥४॥

( शिलापुत्रवत्-न ) स खलु षष्ठीव्यपदेशः शिलापुत्रवन्न शङ्कनीयो यथा शिलापुत्रशब्दे षष्ठीव्यपदेशः। शिलापुत्रस्य शरीरं शिरो हस्तः पादो वा, यतो हि शिलापुत्र एव शिलापुत्रस्य शरीरं तथा शिर आदीनि तस्यैव खण्डभूतानि हि सन्ति, न तथाऽत्र षष्ठीव्यपदेशः। यतः ( धर्मिग्राहकमानबाधात् ) धर्मिणश्चेतनधर्मिणो देहादिव्यतिरिक्तस्यात्मनो ग्राहकं मानं प्रत्यक्षादिप्रमाणं बाध्यते इति हेतोः। शिलापुत्रस्य शरीरमित्यादौ षष्ठीव्यपदेशस्तु तद्भिन्नेन जनेन क्रियते यदस्य शरीरं शिरो नेत्रं वा। प्रत्युत मम शरीरं मनो नेत्रं शिरो वेत्यत्र तु प्रत्यक्षमहमात्मना स्वयं क्रियते, व्यपदेशकर्ता व्यपदेशाद् भिन्न इति प्रत्यक्षप्रमाणबाधप्रसङ्गो भवत्यभेदे। अनुमानं च बाध्यतेऽभेदे शिलापुत्रस्य शरीरं तथैव तिष्ठति परन्तु प्राणिनो देहस्तु चलति तेनानुमीयते यथेष्टचालनसमर्थश्चेतन आत्मा देहे तद्भिन्नोऽस्ति। शब्दप्रमाणमपि बाध्यतेऽभेदे। "उत स्वया तन्वा संवदे···" ( ऋ० ७।८६।२ ) 'स्वया तन्वा' भेदनिर्देशः "तन्मे मनः शिवसङ्कल्पमस्तु" ( यजु० ३४।१ ) मनसो भेदनिर्देशः "चक्षुर्मे पाहि" (यजु० २।१६) चक्षुषो भेदनिर्देशः ॥४॥

तस्य खलु देहादिव्यतिरिक्तस्य चेतनस्यात्मनः—

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥५॥

( कृतकृत्यता-अत्यन्तदुःखनिवृत्त्या ) कृतकृत्यता कृतकार्यता चेतनस्वरूपस्यात्मनः सार्थकताऽऽत्मभावो भवति खल्वत्यन्तदुःखनिवृत्त्या दुःखरूपयाऽनात्मसम्पर्कविमुक्त्या ॥५॥

कथमुच्यतेऽत्यन्तदुःखनिवृत्त्या, न पुनरत्यन्तसुखाप्त्या स्यात् कृतकृत्यता विमोक्षे। अत्रोच्यते।

यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः ॥६॥

( यथा दुःखात् पुरुषस्य क्लेशः—न तथा सुखात्-अभिलाषः ) संसारे मनुष्यस्य यथा दुःखात् क्लेशः क्लिष्टतोद्विग्नता हानिकारी भवति न तथा सुखाद् भवत्यभिरुचिर्हृष्टता लाभकरी, नाशकार्यस्य बलवत्त्वाद्रचनापेक्षया। प्राप्त्यपेक्षया नाशाभावः श्रेयान् शरीरस्य पुष्ट्यपेक्षया नैरोग्यं श्रेयः। तथैव मोक्षेऽत्यन्तदुःखनिवृत्तिरेव वाञ्छनीया ॥६॥

पुनश्च—

कुत्रापि कोऽपि सुखी न ❀ ॥७॥

( कुत्र–अपि कः–अपि सुखी न ) कुत्रचित्स्थानेऽपि कोऽपि जनः सुखी नास्ति ॥७॥

यतः सुखिनो यत् सुखम्—

तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ॥८॥

( तत्–अपि दुःखशबलम्–इति ) तत्सुखमपि दुःखमिश्रमिति मत्वा (विवेचकाः–दुःखपक्षे निःक्षिपन्ते ) विवेकिनस्तत्सुखं दुःखकोटौ स्थापयन्ति विषमिश्रान्नवत्। उक्तं यथा योगदर्शने "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" (योग० २।१५) ॥८॥

दुःखनिवृत्तिरेव पुरुषार्थत्वमुच्यते तत्र सुखलाभाभावात् स्यादपुरुषार्थत्वं यतः सुखलाभाय जनाः पुरुषार्थं कुर्वन्तीत्यत्रोच्यते—

सुखलाभाभावादपुरुषार्थत्वमिति चेन्नैवं×द्वैविध्यात् ॥९॥

(सुखलाभाभावात्-अपुरुषार्थत्वम्-इति चेत्) दुःखनिवृत्तौ सुखलाभाभावादपुरुषार्थत्वमिति चेत् कल्प्येत तर्हि ( न–एवं द्वैविध्यात् ) न ह्येवं कल्पनीयं यतो ह्यत्र सांसारिकदुःखनिवृत्तिवत् केवला दुःखनिवृत्तिरेव नास्ति किन्त्वत्र पुरुषार्थद्वैविध्यमस्ति, अत्रत्यां दुःखनिवृत्तौ पुरुषार्थस्य द्वैविध्यमस्ति याऽत्र दुःखनिवृत्तिस्तस्यामेव पुरुषार्थभूतायामसांसारिकसुखनिष्पत्तिरध्यात्मसुखसम्पत्तिश्चाविनाभावेन सांख्यसिद्धान्ते भवतीति हेतोः पुरुषार्थद्वैविध्यमस्ति। उक्तं हि "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" ( सांख्य० ५।११६ ) तस्मात् सुखलाभाभावदोषो नास्ति। अध्यात्मसुखलाभो ब्रह्मानन्दलाभस्तु तदन्तर्गत एव "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" ( तै० उ० १।२ ) "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" ( तै० ६।३ ) विज्ञानभिक्षुभाष्ये "पुरुषार्थद्वैविध्यात् सुखत्वदुःखाभावत्वाभ्यामित्यर्थः सुखी स्यां दुःखी न स्यामिति हि पृथगेव लोकानां प्रार्थना दृश्यते" ( विज्ञानभिक्षुभाष्यम् ) इत्थं सुखप्राप्तिरपि पुरुषार्थः दुःखनिवृत्तिरपि पुरुषार्थः, तदा केवलायां दुःखनिवृत्तौ पुरुषार्थतायां विज्ञानभिक्षुभाष्यानुसारेण मोक्षे खल्वेकाङ्गिनी कृतकृत्य-

❀ 'सुखी न' अनिरुद्धपाठः 'सुखीति' विज्ञानभिक्षुपाठः।

× 'चेन्न वं' (अनिरुद्धः) 'चेन्न' (विज्ञानभिक्षुः)

ताऽथ पुरुषार्थता चापतति ॥९॥

भवतु पुरुषार्थद्वैविध्यादत्यन्तदुःखनिवृत्तावदोषस्तथा कृतकृत्यता पुरुषस्य परन्तु दुःखसम्पर्क एव पुरुषे नोपपद्यते यतः—

निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥१०॥

( आत्मनः-निर्गुणत्वम् ) पुरुषस्य निर्गुणत्वमस्ति, निर्गुणः स पुरुषः ( असङ्गत्वादिश्रुतेः ) तस्यासङ्गत्वादिश्रवणात् "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) ॥१०॥

समाधत्ते—

परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥११॥

( परधर्मत्वे-अपि ) लौकिकं दुःखादिकं परधर्मोऽन्तःकरणधर्मः । उक्तं हि पूर्वम् "अन्तःकरणधर्मत्वं धर्मादीनाम्" ( सांख्य० ५।२५ ) योगदर्शनेऽपि "कर्मफलं विपाकस्तदनुगुणा वासना आशयास्ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्ता" ( योग० १।२४ व्यासः ) परन्तु, अन्तःकरणधर्मत्वेऽपि ( अविवेकात् ) अन्तःकरणसंसर्गात् तस्य स्वामिभावात् ( तत्सिद्धिः ) पुरुषे दुःखत्वादिसिद्धिर्भवति ॥ ११ ॥

स एषः—

अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥१२॥

( अविवेकः-अनादिः ) अविवेकोऽनादिर्भवति, अभावरूपत्वादन्धकारवत् ( अन्यथा दोषद्वयप्रसक्तेः ) अन्यथा तस्याविवेकस्यानादित्वास्वीकारे सादित्वं भवेत् तर्हि तस्यादित्वे दोषद्वयं प्रसज्यते यत् कुतस्तस्यादित्वमिति प्रश्नः पुनस्तस्यापि कुत आदित्वमिति कल्पनायामनवस्थादोषप्रसङ्गः, अन्योऽयं दोषस्तस्य सादित्वे ततः पूर्वं विवेकेन भवितव्यं हि, सति विवेके न पुनरविवेकोत्पत्तिरविवेकस्याभावरूपत्वात् सति प्रकाशे न हि कदाचिदन्धकारोत्पत्तिः कल्प्यते स एषोऽविवेकस्य सादित्वेऽसम्भवित्वदोषः । कुतश्चित् प्रकाशावरकवन्निमित्तं कल्प्येत चेत् पुनस्तन्निमित्तं पुनस्तन्निमित्तमिति पूर्ववदनवस्थादोषः । एवं दोषद्वयप्रसक्तेर्न सादिरविवेकः किन्त्वनादिरेवाभावरूपत्वादन्धकारवत् ॥१२॥

अनादिः सन्—

न नित्यः स्यादात्मवदन्यथाऽनुच्छित्तिः ॥१३॥

( नित्यः-न स्यात्-आत्मवत् ) अविवेको नित्यो नास्ति किलात्मवत् तस्याभावरूपत्वात्, भावरूपोऽनादिर्भवति नित्यो यथाऽऽत्मा (अन्यथा-अनुच्छित्तिः ) अन्यथाऽविवेकस्य नित्यत्वे स्यादनुच्छित्तिरनाशः ॥१३॥

भवति च तस्याविवेकस्य नाशः कथमित्युच्यते—

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥१४॥

( अस्य प्रतिनियतकारणनाश्यत्वं ध्वान्तवत् ) यथा ध्वान्तस्यान्धकारस्य प्रतिनियतकारणनाश्यत्वम्, अन्धकारः प्रतिनियतकारणेन नितान्तनियतकारणेनाबाध्यनियतकारणेन नाशमेति यतस्तस्य प्रकाशेन प्रतिद्वन्द्विकारणेन नाश्यत्वमस्ति तथैवाविवेकोऽपि प्रतिनियतकारणेनावाध्यकारणेन स्वप्रतिद्वन्द्विना विवेकेन नाशमेति यतस्तेन तस्य नाश्यत्वमस्ति ॥१४॥

एवं हि—

अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥१५॥

( अत्र-अपि प्रतिनियमः ) विवेकेऽपि-अविवेकनाशाय प्रतिनियमः प्रतिकारनियतिः प्रतिद्वन्द्विभावोऽस्ति ( अन्वयव्यतिरेकात् ) सति विवेकेऽविवेकनाशोऽसति विवेकेऽविवेकप्रवृत्तिरित्यन्वयव्यतिरेकस्तस्मात् ॥१४॥

स एष विवेकनाश्यः—

प्रकारान्तरासम्भवादविवेक एव बन्धः ॥१६॥

( अविवेकः-एव बन्धः ) अविवेक एव पुरुषस्य बन्धनहेतुः, बध्यतेऽनेनेति बन्धो बन्धनहेतुः। यतः ( प्रकारान्तरासम्भवात् ) हेत्वन्तरासम्भवात् स्वभावादीनां हेतुत्वनिराकृतत्वात्। तस्माद् विवेको भावयितव्यः पुरुषेण ॥१६॥

भावितविवेकस्य छिन्नाविवेककृतबन्धनस्य—

न मुक्तस्य पुनर्बन्धयोगोऽप्यानावृत्तिश्रुतेः ॥१७॥

( मुक्तस्य पुनः-बन्धयोगः-न ) मुक्तस्य पुनर्बन्धयोगो बन्धनसम्बन्धो न भवति तत्र मुक्तौ ( अनावृत्तिश्रुतेः ) अनावृत्तिश्रवणात् "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य···एतममृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते ( प्रश्नो० १।१० ) ॥१७॥

यतः—

अपुरुषार्थत्वमन्यथा ॥१८॥

( अन्यथा-अपुरुषार्थत्वम् ) यदि मुक्तित आवर्तेत तर्हि तस्य विवेकस्यापुरुषार्थत्वं स्यात्। तस्मान्मुक्तेरवधिमुल्लङ्घ्य न स आवर्तते स्वान् परान् वोद्धतुं यथा अद्यत्वे कैश्चित्कल्प्यते तत आगमनम् ॥१८॥

अन्यच्च—

अविशेषापत्तिरुभयोः ॥१९॥

( उभयोः-अविशेषापत्तिः ) उभयोर्मुक्तबद्धयोः समानत्वमापद्यते ॥ १९ ॥

यस्यै मुक्तये पुरुषार्थः क्रियते सा किंरूपाऽस्तीत्याकांक्षायामुच्यते—

मुक्तिरन्तरायध्वस्तेर्न परः ॥२०॥

( अन्तरायध्वस्तेः परः-न मुक्तिः ) पुरुषस्य नित्यशुद्धबुद्धमुक्तस्वरूपानुभवे यः खल्वन्तरायो दुःखगणो बाधकोऽविवेकोऽस्ति येन पुरुषो प्रातिकूल्यमनुभवति तस्य नाशो मुक्तिर्न ततोऽन्यत् किञ्चिन्मुक्तिस्वरूपम् ॥ २० ॥

अत्र त्वन्तरायनाशो मुक्तिरुच्यते यदर्थः पुरुषार्थः कर्तव्यः किन्तु "सुखलाभाभावादपुरुषार्थत्वमिति चेन्नैवं द्वैविध्यात्" ( सांख्य० ६।६ ) इति पुरुषार्थस्य द्वैविध्यं स्वीकृतं हानलाभाभ्यां परन्त्वत्र प्रस्तुतसूत्रे हानं दर्शितं तत्र पूर्वसूत्रे लाभोऽपि दर्शितः। अत्रोच्यते—

तत्राप्यविरोधः ॥२१॥

( तत्र-अपि-अविरोधः ) यद्यपि मुक्तेरर्थो विमुक्तिर्हानं दुःखहानमन्तरायध्वंसो न ततः परोऽर्थो लाभात्मकस्तथापि तत्र परस्मिन् लाभे हानपूर्वके दुःखहानपूर्वकेऽन्तरायनाशपूर्वके ब्रह्मानन्दलाभेऽपि खल्वविरोधोऽस्ति न विरोधः "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" ( सांख्य० ५।११६ ) इत्युक्तपूर्वत्वात्। पुरुषार्थद्वैविध्यं हि मुक्तौ किल सांख्यसिद्धान्ते स्वीक्रियते ॥२१॥

इत्थमन्तरायध्वस्तिर्दुःखनिवृत्तिर्मुक्तिरथवा दुःखनिवृत्तिश्च ब्रह्मानन्दप्राप्तिश्चोभयस्वरूपा मुक्तिर्यद्वा ब्रह्मानन्दप्राप्तिर्मुक्तिरित्यत्र—

अधिकारित्रैविध्यान्न नियमः ॥२२॥

( अधिकारित्रैविध्यात्-नियमः-न ) अधिकारिणां त्रिविधत्वादुत्तम-मध्यममन्दभेदात् खलु मुक्तिपरिभाषाया नियमो नास्ति, केचिद् दुःख-निवृत्तिर्मुक्तिरिति परिभाषयैव सन्तुष्य विवेकं साधयन्ति ते खलूत्तमा अधिकारिणः। केचन दुःखनिवृत्तिश्च ब्रह्मानन्दप्राप्तिश्च मुक्तिरिति परि-भाषया विवेकमारभन्ते ते मध्यमा अधिकारिणोऽथ केचित्तु ब्रह्मानन्द-प्राप्तिर्मुक्तिरित्येव मनसि निधाय विवेकाय यत्नशीला भवन्ति ते खलु मन्दा अधिकारिणः ॥२२॥

तत्र ब्रह्मानन्दप्राप्तिर्मुक्तिरिति मन्तव्यं कथनं च--

दार्ढ्यार्थमुत्तरेषाम् ॥२३॥

( उत्तरेषां दार्ढ्यार्थम् ) मन्दानामधिकारिणां विवेकसम्पादनाय दृढतार्थं भविष्यति यद् विवेकमवश्यमनुतिष्ठेयुस्ते उक्तं हि पूर्वं मुक्तावा-नन्दप्रसिद्धिः "विमुक्तिप्रशंसा मन्दानाम्" ( सांख्य० ५।६८ ) ॥२३॥

विवेकसम्पादनाय योगाभ्यासोऽप्यनुष्ठेयस्तत्र प्रथमम्—

स्थिरसुखमासनमिति न नियमः ॥२४॥

(स्थिरसुखम्-आसनम्-इति नियमः-न ) स्थिरं सुखं शरीरस्य निश्चलं सुखं यस्मिन् भवेत् तदेवासनमनुष्ठेयमित्येवासनतात्पर्यं न कस्यचिदासन-विशेषस्य नियमः प्रतिबन्धः ॥२४॥

अथ मुख्यं योगसाधनम्—

ध्यानं निर्विषयं मनः ॥२५॥

( निर्विषयं मनः-ध्यानम् ) विषयरहितं वृत्तिरहितं निरुद्धवृत्तिकं समाप्तगुणाधिकारं मन एव ध्यानं तन्मुख्यं योगसाधनम् ॥२५॥

ननु पुरुषो ध्यानादिकमनुतिष्ठेन्न वाऽनुतिष्ठेदुभयथाऽपि स तथैव भवति न हि तत्र पुरुषेऽपायोजनाभ्यां भवितव्यं तस्य निःसङ्गत्वात् "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ )। अत्रोच्यते--

उभयथाऽप्यविशेषश्चेन्नैवमुपरागनिरोधाद् विशेषः ।

निःसङ्गेऽप्युपरागोऽविवेकात् ॥२६,२७॥

अनयोः सूत्रयोरेकवाक्यताऽस्ति--

( उभयथा-अपि-अविशेषः-चेत् ) ध्यानादेरनुष्ठानादननुष्ठानादुभय-

थाऽपि पुरुषोऽविशेषः समान एवावतिष्ठते तस्यासङ्गत्वाद् व्यर्थं ध्यानाद्यनुष्ठानमिति चेदुच्येत तर्हि ( न-एवम्-उपरागनिरोधात्-विशेषः ) नैवं वक्तव्यं यतो हि ध्यानादिना खलूपरागनिरोधाद् भवति विशेषो वैशिष्ट्यं पुरुषे। यतः ( निःसङ्गे-अपि-उपरागः-अविवेकात् ) निःसङ्गेऽपि पुरुषेऽविवेकादुपरागः संसर्गापत्तिर्भवति ॥२६, २७॥

स चोपरागः--

जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥२८॥

( जपास्फटिकयोः-उपरागः-इव न ) जपास्फटिकयोः संसर्गाद् भवति जपापुष्पवर्णस्योपरागः स्फटिकेऽपितु न तथा स उपरागः ( किन्तु--अभिमानः ) पुरुषस्य चेतनत्वात् सोऽभिमन्यते तमुपरागमतः सोऽभिमान एव ॥२८॥

पुनश्च--

ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥२९॥

( ध्यानधारणाभ्यासवैराग्यादिभिः-तन्निरोधः ) ध्यानधारणाप्राणायामासनाभ्यासवैराग्ययमनियमैस्तस्याभिमानस्य निरोधो भवति ॥२९॥

अथापि--

लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥३०॥

( लयविक्षेपयोः-व्यावृत्त्या-इति-आचार्याः ) लयो वृत्तीनां प्रवृत्तीनां निगूढत्वं मूर्च्छितत्वं निद्राभावः, विक्षेपो वृत्तीनां व्यापारः प्रमाणविपर्ययविकल्पस्मृतिरूपः । तथाभूतयोर्लयविक्षेपयोर्निवृत्त्या तन्निरोध उपरागरूपस्याभिमानस्य निरोधो भवतीत्याचार्या अनेके मन्यन्ते ॥३०॥

तत्र ध्यानाद्यनुष्ठाने--

न स्थाननियमश्चित्तप्रसादात् ॥३१॥

( स्थाननियमः-न चित्तप्रसादात् ) स्थानस्य नियमो नापेक्ष्यते चित्तप्रसादात् खलु ध्यानं सम्भवति यत्र स्थाने चित्तं प्रसीदेत्-चित्तमानुकूल्यमनुभवेत् तत्र ध्यानादिकं कार्यम् ॥३१॥

भवतु ध्यानादियोगाभ्यासानुष्ठानात् पुरुषस्योपरागाभिमाननिवृत्तिः, तस्योपरागरूपस्याभिमानस्यादिहेतुभूता प्रकृतिः सा कथं किंरूपा चेत्याकांक्षायामुच्यते--

प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥३२॥

( प्रकृतेः-आद्योपादनता-अन्येषां कार्यत्वश्रुतेः ) समस्तजगद्रचनायां प्रकृतेराद्योपादनत्वमस्ति, यतो ह्यन्येषां जगद्रचनातः पूर्वसृष्टानां महत्तत्त्वाहङ्कारतन्मात्राकाशवाय्वग्निजलपृथिवीनां कार्यत्वश्रवणात् "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।" ( श्वेता० ४।५ ) "एकं बीजं बहुधा यः करोति" ( श्वेता० ६।१२ ) इति प्रकृतेरुपादानत्वमाद्यम्। अथ महत्तत्त्वादीनां कार्यत्वश्रुतिः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ( मुण्डो० २:१।३ ) "एतस्मादात्मनः। आकाशः सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्ययः पृथिवी" ( तै० उ० २।१ ) ॥३२॥

ननु प्रकृतिरेवाद्यमुपादानं कुतो न पुरुषः स्यादुपादानं सोऽपि नित्यः। अत्रोच्यते—

नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥३३॥

( आत्मनः-नित्यत्वे-अपि न योग्यत्वाभावात् ) पुरुषस्य नित्यत्वेऽपि न स उपादानं जगतः, तस्य योग्यत्वाभावात्। न हि पुरुषे जगदुपादानयोग्यत्वं सत्त्वादिगुणवत्त्वं परिणामधर्मित्वं च ॥३३॥

अन्यच्च—

श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥३४॥

( श्रुतिविरोधात् कुतर्कापसदस्य न-आत्मलाभः ) श्रुतिविरोधात्-पुरुषश्चेदुपादानं जगतस्तर्ह्य त्र श्रुतिविरोधो जायते "न तस्य कार्यं करणं च विद्यते" ( श्वेता० ६।८ ) पुनः कुतर्कापसदस्य यः कुतर्केणापसीदति स्वपक्षमन्यथा स्थापयति तस्यात्मलाभ आत्माज्ञानं न भवति। स आत्मविवेकी न जायते यतः परिणामधर्ममात्मनि स्वीकृत्य कथं स्यादात्मलाभः ॥३४॥

अथ च—

पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥३५॥

( पारम्पर्ये-अपि प्रधानानुवृत्तिः-अणुवत् ) जगतः कार्यरूपस्य कारणपरम्परायामपि प्रधानस्य प्रकृत्याख्यस्याव्यक्तस्यानुवर्तनमनुगतवर्तमानत्वमस्ति ह्यणुवत्, यथा कस्यचित् कार्यवस्तुनो घटमठ-

वस्त्रादिकस्य कारणपरम्परायामणुस्तस्यात्यन्तसूक्ष्मभाग एवानुवर्तते तत्र यद् घटस्य कारणं कपालास्तेषां मृत्पिण्डं तत्कारणं मृत्तिकाचूर्णं तस्यापि कारणमणुस्तत्सूक्ष्मावयवः, मठस्य कारणं भित्तिकास्तासां कारणमिष्टकास्तासां च मृत्पिण्डं पुनर्मृद्‍ंशा मृत्तिकाणवो मृत्तिका-सूक्ष्मभागाः, वस्त्रस्य कारणं तन्तवस्तन्तूनां कारणं कार्पासस्तत्कारणं कार्पासाणवः कार्पाससूक्ष्मभागाः। एवमेव समस्तस्य जगतः कारणं पृथिव्यादीनि स्थूलभूतानि तेषां कारणं तन्मात्राणि तेषाञ्चाहङ्कार-स्तस्यापि कारणं महत्तत्त्वं पुनस्तस्यापि प्रधानं प्रकृत्याख्यमव्यक्तमुपादानं कारणमनुवृत्त्या परम्परायां सिध्यति, न हि पुरुषस्तथोपादानत्व-भाग्भवति प्रधाने हि सौक्ष्म्यं निरतिशयं कारणपरम्परायाम्। उक्तं च "न चालिङ्गात् परं सूक्ष्ममस्ति"'अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम्'"अन्वयिकारणं पुरुषो न भवति" ( योग० १।४५ व्यासः ) ॥३५॥

पुनश्च तस्य—

सर्वत्र कार्यदर्शनाद् विभुत्वम् ॥३६॥

( सर्वत्र कार्यदर्शनात्-विभुत्वम् ) सर्वासु दिक्षु सर्वस्मिन् ब्रह्माण्डे कार्यदर्शनात् तस्योपादानकारणरूपप्रधानस्य प्रकृत्याख्यस्याव्यक्तस्य विभुत्वं व्यापकत्वं ब्रह्माण्डव्यापित्वं विश्वव्यापित्वमस्ति। प्रधानस्य विभुत्वं ब्रह्माण्डमपेक्ष्यास्ति लोकलोकान्तरापेक्षया व्यापकत्वं प्रदर्शितं न हि ब्रह्माण्डाद् बहिरपि विराजमानस्य परमात्मनोऽपेक्षया, परमात्मा हि समस्तब्रह्माण्डाद् बहिरपि विराजते। उक्तं यथा श्रुतौ "एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः" ( यजु० ३१।३ ) ॥३६॥

प्रधानस्य विभुत्वं सर्वत्र कार्यदर्शनादुच्यते न ह्यनन्तत्वात्, यत्र कुत्र तस्य लोकलोकान्तररूपं कार्यं कार्यरूपे परिणतिस्तत्र तत्रस्थगति-मन्तरेण न स्यात्, या च गतिः क्षोभाख्या भवति यद्विषये खलूक्तम् "एकं बीजं बहुधा यः करोति" ( श्वेता० ६।१२ ) तदा कथं तस्याद्य-कारणता स्यादित्युच्यते—

गतियोगेऽप्याद्यकारणताऽहानिरणुवत् ॥३६॥

(गतियोगे-अपि-आद्यकारणताऽहानिः-अणुवत्) गतियोगेऽपि तथा-विधलोकलोकान्तररूपपरिणामप्राप्तये गतिसम्बन्धेऽपि क्रियासम्बन्धेऽपि तस्याद्यकारणतायाः खल्वहानिर्न हानिर्भवति, अणुवत्। यथा ह्यणवो

गतियोगात् क्रियासम्बन्धात् खलु घटमठवस्त्रादिकस्याद्यकारणतां भजन्ते यथा वा पार्थिवाद्यणवो गतियोगे पृथिवीपिण्डादिकानां मूलकारणानि सन्ति तथैव प्रधानस्यापि गतियोगो नाद्यकारणताया घातकः ॥३७॥

अणुवदित्युच्यते यदि प्रसिद्धानामणूनामिवाद्यकारणता प्रधानस्यापि तर्हि कृतं स्यादणुस्वीकारे न पुनः प्रधानस्वीकारस्यावश्यकतेत्याकांक्षायामुच्यते—

प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥३८॥

(प्रसिद्धाधिक्यं प्रधानस्य) जगत्कारणत्वेन प्रसिद्धेभ्योऽणुभ्य आधिक्यं ज्यैष्ठ्यं प्रधानस्याद्यकारणतायाम् (नियमः-न) अतो नियमो न यदणवः समस्तस्य जगतोऽप्याद्यकारणतां भजेरन् । भवन्तु खलु पृथिव्यादिपिण्डानां यद्वा पृथिव्यादिभूतानामाद्यकारणानि तेऽणवस्तेषां सूक्ष्मांशास्तन्मात्राख्याः, परन्तु तेभ्योऽपि कारणमहङ्कारस्तस्यापि महत्तत्त्वं पुनस्तस्यापि कारणं प्रधानमतः प्रधानस्याद्यकारणतायामाधिक्यं ज्यैष्ठ्यमणुभ्यः ॥३८॥

अयमन्योऽपि हेतुः प्रधानस्य ज्यैष्ठ्ये यत्—

सत्त्वदीनामतद्धर्मत्वं तद्रूपत्वात् ॥३९॥

( सत्त्वादीनाम्-अतद्धर्मत्वं तद्रूपत्वात् ) सत्त्वरजस्तमसामतद्धर्मत्वं प्रधानाधर्मत्वं प्रधानागुणत्वम् , न हि सत्वरजस्तमांसि प्रधानस्य धर्मा गुणाः सन्ति तद्रूपत्वात् तत्स्वरूपत्वात् । उक्तं हि पूर्वम् "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" ( सांख्य० १।६१ ) अणवस्तु सत्त्वरजस्तमोगुणवन्तो न तु तद्रूपास्तन्मयाः किन्तु स्वस्वभूतविषयकगन्धादिगुणवन्तश्च उक्तं हि "पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं तैजसस्य रूपतन्मात्रं वायव्यस्य स्पर्शतन्मात्रमाकाशस्य शब्दतन्मात्रम्" (योग० १।४५ व्यासः) प्रधानस्य न गुणवत्त्वमतो ज्यैष्ठ्यं तेभ्योऽणुभ्यस्तस्य ॥३९॥

तस्यैतस्य महत्त्वपूर्णस्य जडस्य प्रधानस्यैतादृशी महती प्रवृत्तिः किमर्थेत्युच्यते—

अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥४०॥

( प्रधानस्य-अनुपभोगे-अपि सृष्टिः पुमर्थम्-उष्ट्रकुङ्कुमवहनवत् )

प्रधानस्य स्वानुपभोगेऽपि तस्य सृष्टिः सर्जनप्रवृत्तिः पुरुषार्था पुरुषप्रयोजनाय यथा ह्युष्ट्रः कुङ्कुमं बहुमूल्यं परार्थं वहति स्वोपभोगाभावे तद्वत् प्रधानस्य सृष्टिः सर्जनप्रवृत्तिरपि न स्वार्था किन्तु पुरुषार्था ॥४०॥

यतः प्रधानस्य सृष्टिः परार्थाऽत एव—

कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥४१॥

( कर्मवैचित्र्यात् ) पुरुषाणां कर्मवैविध्यात् ( सृष्टिवैचित्र्यम् ) प्रधानस्य सृष्टिवैविध्यं भवति ॥४१॥

भवतु पुरुषकर्मवशाद् विविधा सृष्टिः, तस्या विविधसृष्टेरुत्पादनाशौ कार्ये कथं भवत इत्याकांक्षायामुच्यते—

साम्यवैषम्याभ्यां कार्यद्वयम् ॥४२॥

(कार्यद्वयं साम्यवैषम्याभ्याम् ) विविधसृष्टेरुत्पादो नाशश्च द्वे कार्ये सत्त्वरजस्तमसां वैषम्यात् साम्याच्च भवतः। सत्त्वरजस्तमसां वैषम्यान्न्यूनाधिकयोगाद् विविधसृष्टेरुत्पादोऽथ तेषामेव साम्याद् भवति नाशो यतः सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरित्युक्तत्वात् ॥४२॥

ननु सत्त्वरजस्तमसां वैषम्ये सत्यपि विमुक्तं प्रति प्रधानस्य सृष्टिः कुतो न भवतीत्यत्रोच्यते—

विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥४३॥

( विमुक्तबोधात् प्रधानस्य सृष्टिः--न लोकवत् ) विमुक्तोऽहमिति बोधात् खलु विमुक्तं प्रति प्रधानस्य सृष्टिर्न भवति लोकवत् कृतकृत्यत्वात्, यथा लोके भुक्तभोजनो न पुनर्भोजनाय प्रवर्तते ॥४३॥

ननु विमुक्तो न प्रवर्तेत सृष्टिभोगाय किन्तु प्रधानस्य विभुत्वात् सर्वत्र तस्य सृष्टिकार्याय प्रवृत्तत्वाद् विमुक्तस्यापि तत्सृष्टेरुपगमनं तु भविष्यतीत्यत्रोच्यते--

नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥४४॥

( अन्योपसर्पणे-अपि मुक्तोपभोगः-न ) भोग्यायाः प्रधानसृष्टेरुपसर्पणे मुक्तसमीपगमनेऽपि मुक्तस्योपभोगो न भवति ( निमित्ताभावात् ) उपभोगनिमित्तभूताया वासनाया अभावात्। वासना खलु विवेकान्निवृत्ता तस्मान्मुक्तस्य समीपेऽपि प्राप्तायाः प्रधानसृष्टेरुपभोगो न भवति ॥४४॥

एवं केचन मुक्ताः केचिद्बद्धाः पुरुषाः सन्तीतीत्थम्—

पुरुषबहुत्वं व्यवस्थातः ॥४५॥

( व्यवस्थातः पुरुषबहुत्वम् ) मुक्तबद्धव्यवस्थातः पुरुषबहुत्वमस्ति ॥ ४५ ॥

आशङ्क्य समाधत्ते—

उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ॥४६॥

( उपाधिः–चेत् ) पुरुषस्य मुक्तत्वबद्धत्वयोः कारणमुपाधिरस्ति न पुरुषबहुत्वं पुरुषस्त्वेक एव, मुक्तत्वं बद्धत्वं चाधिकृत्य पुरुषबहुत्वसाधनं न युक्तं यतस्तद्बहुत्वमुपाधिकृतमिति चेदुच्येत तर्हि ( तत्सिद्धौ पुनः–द्वैतम् ) उपाधितो भेदसिद्धौ पुनस्तथैव द्वैतं मुक्तत्वबद्धत्वे स्थिते एव तेन केचन मुक्ताः केचिच्च बद्धाः सन्ति पुरुषा इति तथैव पुरुषबहुत्वं सिद्धं तिष्ठत्येव ॥४६॥

उपाधिर्न स्थिरः स तु खल्वाविद्यको मिथ्याऽसत्यस्तेन न पुरुषस्य मुक्तत्वबद्धत्वभेदोऽपि स्थिरस्तस्मान्न पुरुषबहुत्वमित्यत्रोच्यते—

द्वाभ्यामपि प्रमाणविरोधः ॥४७॥

( द्वाभ्याम्–अपि प्रमाणविरोधः ) उपाधेर्द्वाभ्यां प्रकाराभ्यां स्थिरत्वास्थिरत्वाभ्यां वास्तविकत्वावास्तविकत्वाभ्यां सत्यत्वमिथ्यात्वाभ्यामपि खलु प्रमाणविरोधोऽस्ति, प्रमाणं खलु पुरुषबहुत्वस्य "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" ( बृह० ४।४।१४ ) अत्र प्रमाणे मुक्ता अपि बहवो बद्धा अपि बहवः सन्तीति स्पष्टमस्ति । उपाधेः स्थिरत्वे मुक्तो बद्धश्चेति पुरुषद्वैतमेवायाा त बद्धो वा मुक्तो वा द्वावेव पुरुषौ स्यातां न पुरुषबहुत्वं मुक्तबहुत्वं बद्धबहुत्वञ्च । इत्थमुपाधेः प्रकारद्वयं प्रमाणविरुद्धम्, प्रमाणे तु मुक्ता अपि बहवो बद्धा अपि बहवः सन्ति तस्मात् पुरुषबहुत्वं सुतरां सिद्धम् । अनिरुद्धवृत्तौ विज्ञानभिक्षुभाष्ये चेदं चातः पूर्वं चोभे सूत्रे द्वैतं साधयितुमन्यथा व्याख्याते, ते इमे सूत्रे पूर्वपक्षमुत्थाप्य पुरुषबहुत्वसाधनाय स्तो न हि द्वैतसाधनाय तत्रोत्तरसूत्रे "द्वाभ्यामपि प्रमाणविरोधः" इत्यत्र प्रमाणविरोधः कथमिति न काञ्चिच्छ्रुतिमुद्धृत्योदाहृत्य च प्रदर्शितम् । विज्ञानभिक्षुभाष्ये तु 'पुरुषोऽविद्या' इति चाप्रासाङ्गिकं कल्पितमत्र ॥४७॥

नन्वद्वैतश्रुतिरपि त्वस्ति "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ )

इत्थं त्वेकत्वबहुत्वप्रतिपादकश्रुत्योः परस्परं विरोध आपत्स्यते । अत्रोच्यते–

द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरञ्च साधकाभावात् ॥४८॥

( द्वाभ्याम्–अपि--अविरोधः ) पुरुषैकत्वबहुत्वप्रतिपादकश्रुतिभ्यां सांख्यसिद्धान्तस्याविरोध एवास्ति, तत्रैकत्वश्रुतेर्जातिपरत्वादुक्तपूर्वत्वात् "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) अत्र जातिपरत्वमेकवचनम "नाद्वैतश्रुतिविरोधो जातिपरत्वात्" ( सांख्य० १। १५४ ) उक्तं हि पूर्वम् । तथा बहुत्वश्रुतेर्व्यक्तिपरत्वात् पुरुषबहुत्वमस्ति । तस्मात् (पूर्वम्–उत्तरं च न साधकाभावात् ) नान्यथा पुरुषबहुत्वकल्पनादेषो यथोपाधितः पूर्वदोष उक्तः । न चोत्तरदोषः प्रमाणविरोधो भवति सांख्यसिद्धान्तेऽत्र साधकाभावात् तत्र दोषसाधकाभावात् ॥४८॥

ननु मा भूदुपाधितः पुरुषबहुत्वं किन्तु पुरुषस्त्वेक एव परन्तु स प्रकाशस्वरूपः स निजप्रकाशतः स्वात्मानं बहुभावेन प्रकाशयतीत्यत्रोच्यते--

प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥४९॥

( प्रकाशतः-तत्सिद्धौ ) पुरुषस्य निजप्रकाशतो बहुत्वसिद्धौ पुरुषबहुत्वसिद्धौ ( कर्मकर्तृविरोधः ) कर्मकर्तृविरोध आपद्यते । कर्म च कर्ता च भिन्नभिन्नौ भवतो न ह्येकस्यैव कर्मत्वं कर्तृत्वं चोभयं भवति, प्रकाशकः खलु प्रकाश्यमपेक्षते यं हि स प्रकाशयेत् प्रकाश्यमन्तरेण प्रकाशकसिद्धिरपि न भवति । तस्मादेषा कल्पनाऽपि न युक्ता ॥४९॥

पुनश्चापरो दोषोऽयम्--

जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ॥५०॥

( जडव्यावृत्तः–चिद्रूपः ) पुरुषः खलु जडाद् भिन्नश्चेतनस्वरूपो न हि सूर्य इव जडः प्रकाशवान् । तस्माच्चेतनः सन् सः ( जडं प्रकाशयति ) जडमन्तःकरणेन्द्रियशरीररूपं जडं प्रकाशयति, जडं तस्य प्रकाश्यं भवति न स्वप्रकाशप्रसङ्गः स्वयंप्रकाशस्वरूपत्वात् । तस्मात् पुरुषबहुत्वं पुरुषस्य प्रकाशस्वरूपत्वान्न युक्तम् ॥५०॥

यद्येवं पुरुषः प्रकाशस्वरूपो न सूर्य इव प्रकाशधर्मवान् तर्हि "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।" ( यजु० ३१।१८ ) इति श्रतितो-

विरोधः स्यात्, अत्र श्रुतौ सूर्य इव प्रकाशधर्मवान् पुरुष उक्त एव। अत्रोच्यते—

न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥५१॥

(श्रुतिविरोधः-न) श्रुतेर्विरोधो नास्ति, यतः श्रुतौ (रागिणां वैराग्याय तत्सिद्धेः) रागिणां जनानां वैराग्याय संसाराद् वैराग्योत्पादनाय सूर्य इव प्रकाशवान् परमपुरुषः परमात्मा सूचितस्तद्भिन्नः ससारश्च तमोरूपः, तमोरूपात् संसारात् स्याद् वैराग्यं रागिणोऽतः परमपुरुष आदित्य इव प्रकाशवानुक्तः, तमेव ज्ञात्वा मृत्युमतिक्रम्यामृतत्वं प्राप्नोतीतिलक्ष्यमपि वैराग्यस्य निर्दिष्टम्। अतः परमपुरुषस्य प्रकाशवत्त्वकथनसिद्धिः श्रुतौ न स्वतः पुरुषबहुत्वप्रकाशनाय। विज्ञानभिक्षुभाष्ये सूत्रमिदमप्रासङ्गिककल्पनायां सूत्रशैल्या विपरीतं योजितं तन्न सम्यक्॥ ॥५१॥

ननु परमपुरुषस्य प्रकाशवत्त्वप्रतिपादिकायां श्रुतौ जगतो वैराग्यकल्पनाऽव्यर्थं क्रियते किन्तु जगदेव नास्ति मिथ्या खलु जगत् स्वप्नवन्मायावद्वा निरर्थकं वैराग्यसम्पादनम्। अत्रोच्यते—

जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात् ॥५२॥

(जगत्सत्यत्वम्) जगतः सत्यत्वमस्ति न मिथ्यात्वं स्वप्नवत् तथा न मायावच्छुक्तिकायां रजतवद् रज्ज्वां सर्पवद्वा। यतः (अदुष्टकारणजन्यत्वात्-बाधकाभावात्) न हि दुष्टकारणाज्जगतो जन्यत्वं यथा निद्रादोषात् स्वप्नः, तथेन्द्रियदोषाच्छङ्खपीतत्वमस्ति, दूरतोऽल्पप्रकाशाद्वा संस्कारदोषाद्वा भ्रमः शुक्तिकायां रजतस्य रज्ज्वां सर्पस्य वा, अपितु "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" (ऋ० १०।१९०।३) परमात्मना जन्यं जगत् स्पष्टमुक्तं श्रुतौ। बाधकाभावादपि जगन्न स्वप्नवन्मायावच्च शुक्तिकायां रजतमिव रज्ज्वां सर्प इव, न हि जगतो बाधकमत्र किञ्चिदुपलभ्यते यथा स्वप्नवस्तुनो बाधकं जागरणं यथा वा मायावतः शुक्तिकारजतस्य रज्जुसर्पस्य बाधकमावरणद्रव्यविच्छेदः सावधानदृष्टिः प्रकाशश्च भवति न तथाऽत्र, जगत्तु प्रत्यक्षादिप्रमाणैरुपलभ्यते हि ॥५२॥

पुनश्च—

प्रकारान्तरासम्भवात् सदुत्पत्तिः ॥५३॥

(प्रकारान्तरासम्भवात्) जगत उत्पत्तिविषये प्रथमाध्यायोक्तप्रका-

रान्तराणां निराकृतत्वात् ( सदुत्पत्तिः ) सत एवानभिव्यक्तरूपेण विद्यमानस्यैव जगत उत्पत्तिरभिव्यक्तिर्भवति। तस्मादपि जगतो मिथ्यात्वं मायावत्त्वं वा न ॥५३॥

जगतो न मिथ्यात्वम्, भवतु तस्यास्तित्वम्, जगत् संहतं संहतपरार्थत्वात् पुरुषस्य भोगार्थं तत् पुनस्तत्र जगति पुरुषस्य जीवात्मनः साक्षात्कर्तृत्वं यद्वा तद्भिन्नस्येत्याकांक्षायामुच्यते—

अहङ्कारः कर्ता न पुरुषः ॥५४॥

( अहङ्कारः कर्ता ) अहङ्कारः कर्तृत्वव्यापारवान्, अहंवृत्तिकस्यान्तःकरणस्य कर्तृत्वव्यापारस्तस्य चलनविचलनधर्मवत्त्वात ( पुरुषः-न ) पुरुषो न कर्ता-कर्तृत्वव्यापारवान् न, तस्य निष्क्रियत्वाच्चलनविचलनधर्मरहितत्वात् ॥५४॥

भवतु खल्वहङ्कारः कर्ता कर्तृत्वव्यापारवान् परन्तु नाहङ्कारो भोक्ता तस्य संहतपरार्थत्वात् पुरुषो भोक्तेत्येतत् सहेतुकमुच्यते—

चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥५५॥

( भुक्तिः-चिदवसाना ) भोगः खलु चिति-चेतने पुरुषेऽवसानं संस्थानं यस्य तथाभूतः पुरुषसंस्थानः पुरुषनिमित्तः पुरुषायेति यावत्। कुतः ( तत्कर्मार्जितत्वात् ) पुरुषस्य तत्कर्मार्जितत्वात्, तस्याहङ्कारस्य कर्माणि तत्कर्माणि, तत्कर्माणि-अर्जितानि-उपार्जितानि चरितानि सञ्चितानि यस्मै पुरुषाय स तत्कर्मार्जितः पुरुषस्तस्य तत्कर्मार्जितत्वात्। अथवा तस्मै पुरुषाय कर्म तत्कर्म तदर्थं कर्म तत्कर्म-अर्जितं येन स तत्कर्मार्जितोऽहङ्कारस्तस्याहङ्कारस्य तत्कर्मार्जितत्वात्। उभयत्रापि, विग्रहयोरहङ्कारो हि पुरुषाय कर्माण्यनुतिष्ठति तस्य परार्थत्वात् पुरुषार्थत्वात् कुठारवत् करणमुपकरणं साधनं ह्यहङ्कारः पुरुषस्य "...करणत्वाद् वास्यादिवत्..." ( सांख्य० ५।६६ ) तस्मात्पुरुषो भोक्ता। उक्तं हि "भोगापवर्गार्थं दृश्यम्" ( योग० २।१८ ) ॥५५॥

ननु पृथिवीलोकादुत्कृष्टे चन्द्रलोके तत्कर्मवशादुत्कृष्टभोगार्थाय गतस्य पुरुषस्य तत्रैव कृतकृत्यता भवति यद्वा ततोऽप्यावर्तते पुनर्जन्मग्रहणाय। अत्रोच्यते—

चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥५६॥

( चन्द्रादिलोके-अपि-आवृत्तिः ) चन्द्रादिलोकेऽपि पुरुषस्य न तत्र

स्थिरत्वं कृतकृत्यता वा किन्तु तत्रापि पुनर्जन्मावृत्तिर्भवति ( निमित्त-सद्भावात् ) पुनर्जन्मनिमित्तस्याविवेकवासनादिकस्य वर्तमानत्वात् ॥५६॥

अपितु--

लोकस्य नोपदेशात् तत्सिद्धिः पूर्ववत् ॥५७॥

( लोकस्य ) संसारस्य लोकस्थस्य * प्रत्येकलोकस्थस्य मनुष्यस्य मनुष्यमात्रस्येतियावत् ( उपदेशात् तत्सिद्धिः-न ) उपदेशमात्रात्-उपदेश-श्रवणमात्रात् खलु मुक्तिसिद्धिर्न भवति ( पूर्ववत् ) पूर्वकथनवद् भवति श्रवणमननिदिध्यासनसाक्षात्काराणामनुष्ठानाद् भवति मुक्तिसिद्धिः॥५७॥

ननूपदेशश्रवणमात्रादपि मुक्तिर्भवतीति श्रुतिर्वदति "श्रुत्वा च मेधावी ब्रह्मलोके महीयते" ( कठो० १।३।१६ ) अत्रोच्यते--

पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥५८॥

( विमुक्तिश्रुतिः ) उपदेशश्रवणाद्विमुक्तिरित्यत्र श्रुतिः ( पारम्पर्येण तत्सिद्धौ ) परम्परया तच्छ्रवणचतुष्टयसिद्धौ मन्तव्या, यच्छ्रुत्वा मत्वा निदिध्यास्य साक्षात्कृत्येत्येष तत्राभिप्रायः, यतस्तत्रैवान्ते श्रूयते "मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्। ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव" ( कठो० २।६।१८ ) अत्र योगविधिश्चोपायः प्रोक्तः । तत्रैवेदमप्युक्तम् "एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृध्य धर्म्यमणुमेतमाप्य स मोदते मोदनीयं लब्ध्वा" ( कठो० १।२।१३ ) अत्र वचने श्रुत्वा श्रवणं कृत्वा, सम्परिगृह्य-मत्वा मननं कृत्वा, प्रवृध्य-निदिध्यास्य-निदिध्यासनं कृत्वा, आप्य-प्राप्य-साक्षात्कृत्य-साक्षात्कारं कृत्वा । इति स्पष्टं हि श्रवणचतुष्टयम् ॥५८॥

विमुक्तेरनन्तरं मुक्तिविषये पूर्वपक्षत्वेनोच्यते--

गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद् भोगदेशकाललाभो व्योमवत् ॥५९॥

( व्यापकत्वे-अपि ) आत्मनो व्यापकत्वस्वीकारेऽपि (उपाधियोगात्-गतिश्रुतेः-च ) उपाधिसम्बन्धाद् गतिश्रुतेश्च तस्य या खलु देहान्तरगति-श्रुतिरस्ति "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥" ( कठो० २।५।७ ) इति गतिश्रुतेर्देहरूपोपाधि-

* तात्स्थ्योपाधिना लोकस्थस्य ।

सम्बन्धात् सम्भवस्तस्यात्मनो देहान्तरगतिः सम्भवति । कथम् ( व्योमवत् ) यथाऽऽकाशो व्यापको घटाद्युपाधियोगाद् यत्र तत्र गतिमान् भवति तथैव तस्यात्मनो व्यापकत्वेऽपि गतिनिमित्तात् ( भोगदेशकाललाभः ) भोगस्य देशकाललाभो भवतीत्यत आत्मा विभुर्मन्तव्यः ॥ ॥५६॥

उत्तरयति--

अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ॥६०॥

( अनधिष्ठितस्य पूतिभावप्रङ्गात् ) आत्मा व्यापकः सन् देहरूपोपाधियोगाद् भोगस्य देशकालौ लभते, स्यादेतद् देहरूपोपाधिप्राप्तेरनन्तरं परन्तूत्पद्यमानस्य देहस्यानधिष्ठितस्यात्मनाऽनधिष्ठितस्य पूतिभावप्रसङ्गो गलितत्वप्रसङ्गो भवेत्, तस्मात् ( तत्सिद्धिः-न ) न आत्मनो व्यापकत्वसिद्धिस्तथा व्यापकत्वाद् देहोपाधियोगाद् गतिं स्वीकृत्य भोगसिद्धिश्च न भवति ॥६०॥

ननूत्पद्यमानो देहो नात्मनोऽधिष्ठानमपेक्षेत किन्त्वदृष्टमपेक्षेत, अदृष्टयोगाद् देहस्योत्पद्यमानता तथाऽपूतिभावश्च भवेत् । अत्रोच्यते--

अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥६१॥

( अदृष्टद्वारा चेत् ) अदृष्टद्वारा देहस्योत्पद्यमानत्वं भवेदिति चेत् तर्हि ( असम्बद्धस्य तदसम्भवात् ) जीवात्मसम्बन्धमन्तरेणादृष्टं न प्रवर्तते तथाभूतस्यासम्बद्धस्य तस्यादृष्टस्य तत्र देहशुक्रादावसम्भवाद् देहोत्पत्तिहेतुत्वासम्भवोऽस्ति ( अङ्कुरे जलादिवत् ) अङ्कुरोत्पत्तौ बैजिकजीवत्वमन्तरेण यथा जलखाद्यादियोगस्य हेतुनैरर्थक्यं भवति ॥ ॥६१॥

पुनश्चायमन्यो दोषः--

निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥६२॥

( निर्गुणत्वात् ) आत्मनो निर्गुणत्वाद् गुणसम्पर्करहितत्वात् केवलं चेतनस्वरूपत्वात् ( तदसम्भवात् ) तत्रादृष्टासम्भवस्तस्मान्नैष सिद्धान्तो युक्तः । यतः ( एते-अहङ्कारधर्माः-हि ) एतेऽदृष्टादयोऽहङ्कारस्य हि धर्माः सन्ति ॥६२॥

अथ च--

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥६३॥

( विशिष्टस्य जीवत्वम् ) अहङ्कारविशिष्टस्याहमिति प्रत्ययान्वितस्याहमित्यभिमानयुक्तस्यात्मनो जीवत्वं जीवसंज्ञेति यावत् ( अन्वयव्यतिरेकात् ) अन्वयव्यतिरेकाभ्याम्, यत्राहमित्यनुभूतिः स जीवो यत्र नास्ति न स जीवः ॥६३॥

अहङ्कारविशिष्ट आत्मा जीव इत्युक्तं तस्य तथाविधस्य जीवस्य कार्यसिद्धिः कथं भवति, किमीश्वराधीना ? अत्रोच्यते--

अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥६४॥

(अहङ्कारकर्त्रधीना कार्यसिद्धिः) जीवस्य कार्यसिद्धिः कार्यनिष्पत्तिः कर्मप्रवृत्तिर्वाऽहङ्काररूपस्य कर्तुरधीना भवति यतस्तद्विशिष्टो हि जीवः ( ईश्वराधीना न ) ईश्वराधीना न । कुतः ( प्रमाणाभावात् ) ईश्वराधीनं जीवस्य कर्मेत्यत्र न प्रमाणमुपलभ्यते। जीवः खलु कर्मकरणे नेश्वराधीनत्वमपेक्षते । अपितु स्वातन्त्र्येण कर्मकरणाय श्रुतिः "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" ( यजु० ४०।२ ) । सांख्यकर्तुर्दृष्टौ खल्वीश्वरसत्ताऽस्तीति सिध्यति तस्मादेव तस्याधीनत्वनिषेधो जीवस्य कर्मकरणे ॥६४॥

जीवस्य कर्मसिद्धिरहङ्काराधीना मन्यते सा खल्वदृष्टाधीना मन्तव्या यथा यथा यस्य यस्य जीवस्यादृष्टं भविष्यति तथा तथा तस्य तस्य जीवस्य कार्यसिद्धिर्भविष्यति । अत्रोच्यते—

अदृष्टोद्भूतिवत् समानम् ॥६५॥

( अदृष्टोद्भूतिवत् समानम् ) अदृष्टोद्भूतिरदृष्टोत्पत्तिः-जीवस्यादृष्टोत्पत्तिरपि तु कर्मद्वाराऽहङ्कारनिमित्तैव तच्चेदं पूर्वमुक्तम् "चिद्वसाना भुक्तिस्तत्कर्मार्जितत्वात्" [५५] तस्मात् समानत्वमदृष्टाधीनमन्तव्येऽप्यहङ्काराधीनत्वमेव कार्यसिद्धेरायाति ॥६५॥

भवतु जीवस्य कार्यसिद्धिः कर्मप्रवृत्तिरहङ्कारात्मकेनान्तःकरणेन परन्तु तत्कर्मफलभुक्ति भोगानुभूतिं केनोपकरणेनानुतिष्ठति या हि भुक्तिरुक्ता "चिद्वासना भुक्तिस्तत्कर्मार्जितत्वात" [५५] इतिसूत्रे । उच्यते--

महतोऽन्यत् ॥६६॥

( अन्यत्-महतः ) कार्यसिद्धेः कर्मप्रवृत्तेरन्यत् खलु भुक्तिर्भोगानुभूतिर्महत्तत्त्वस्य बुद्धिरूपस्यान्तःकरणस्य कार्यं तद्द्वारा भोगानुभूतिं करोति जीवः, बुद्धिसत्त्वोपारूढा हि सर्वे भोगा इति च प्रसिद्धिः। यतो हि "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) भोगं तु बुद्धिसत्त्वेनानुतिष्ठति तदभावे भोगाभावोऽथ विमुक्तिरित्यप्यनुसन्धेयम् ॥६६॥

अथ महत्तत्त्वानन्तरं प्रकृतेः पुरुषेण सह सम्बन्धः कथम्भूत इत्युच्यते--

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥६७॥

(प्रकृतेः स्वस्वामिभावः-अपि बीजाङ्कुरवत्-अनादिः कर्मनिमित्तः) प्रकृतेः पुरुषेण सह 'पुरुषेण' इति लभ्यतेऽर्थात् प्रस्तुतपुरुषप्रकरणात् 'प्रकृतेः' षष्ठीसम्बन्धाच्च। प्रकृतेः पुरुषेण सह स्वस्वामिभावसम्बन्धः, प्रकृतिस्तु स्वं पुरुषस्याथ पुरुषः स्वामी तस्याः। स एष प्रकृतिपुरुषयोः स्वस्वामिसम्बन्धोऽपि बीजाङ्कुरवत् प्रवाहरूपेणानादिरस्ति, यथा बीजाङ्कुरयोः सम्बन्धः प्रवाहेण प्रवर्तते सति बीजेऽङ्कुरः सत्यङ्कुरे पुनर्बीजं तथैव सति स्वे स्वामी सति स्वामिनि स्वं भवति। स एष प्रकृतिपुरुषयोः स्वस्वामिभावः कर्मनिमित्तोऽस्ति न स्वाभाविको नित्यो वा कर्मशब्दादत्र धर्माधर्मसंस्काराऽभिप्रेतः। कर्मक्षये स्वस्वामिसम्बन्धाभावस्तदभावात् खलु मोक्ष इत्यप्यनुसन्धेयम् ॥६७॥

तत्र पञ्चशिखमतमाह—

अविवेकनिमित्तको * वा पञ्चशिखः ॥६८॥

( वा ) अथवा ( अविवेकनिमित्तकः ) अविवेकहेतुको भवतु प्रकृतः स प्रकृतिपुरुषयोः स्वस्वामिभावसम्बन्धः ( पञ्चशिखः ) तथाह्याह पञ्चशिखः। अत्र वाकारः पूर्वापेक्षया वैशिष्ट्यप्रदर्शनाय, पञ्चशिख इति प्रमाणप्रदर्शनम् ॥६८॥

मतान्तरमाह--

लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥६९॥

( लिङ्गशरीरनिमित्तकः ) स एव प्रकृतिपुरुषयोः स्वस्वामिभावो

* 'अविवेकनिमित्तकः, पाठोऽनिरुद्धस्य 'अविवेकनिमित्तः' विज्ञानभिक्षोः

लिङ्गशरीरनिमित्तकोऽस्ति । लिङ्गशरीरेणात्र स्थूलशरीरधारणाय या वासनाशक्तिः सा गृह्यत इत्युत्प्रेक्षा (इति सनन्दनाचार्यः) इत्थं सनन्दनाचार्यो मन्यते ॥६६॥

इत्थं प्रकृतिपुरुषयोः स्वस्वामिभावे सति स्वामी पुरुषः स्वभूतां प्रकृतिं यदा पश्यति तदा तदन्तरे 'पुरुषान्तरे' भोगप्रवृत्तिरुपजायतेऽत एव स महत्तत्त्वेन बुद्ध्या युज्यते यथोक्तम् "महतोऽन्यत्" [ ६६ ] पश्चाद् भोगार्थचेष्टनायाहङ्कारमादत्ते चेष्टनं कर्मप्रादुर्भावो भवति ह्यहङ्कारसाधनेन, उक्तं हि "अहङ्कारकर्त्रधीना कार्यसिद्धिः" [ ६४ ] पुनः कार्यसाधनायेन्द्रियाण्यधितिष्ठति, इन्द्रियाण्यधिष्ठातुं शरीरे प्रविशति, शरीरे प्रविश्य तैरिन्द्रियैर्विषयान् परिधावति पुनस्त्रिविधानि दुःखान्यनुभवतीति स्वस्वामिभावस्य परिणामः । तस्मात्—

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥७०॥

( यत्-वा-तत्-वा तदुच्छित्तिः पुरुषार्थः-तदुच्छित्तिः पुरुषार्थः ) यत्तत्किमपि निमित्तं भवतु प्रकृतिपुरुषयोः स्वस्वामिसम्बन्धस्य तदुच्छेदस्तन्नाशः पुरुषार्थः पुरुषस्वरूपलाभः "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) आत्यन्तिकदुःखनिवृत्तिरूपो मोक्षो ब्रह्मसम्पत्त्यात्मकः प्रसादो भावनीयः सम्पादनीयः । अन्ते द्विरुक्तिरध्यायसमाप्त्यर्था ग्रन्थसमाप्त्यर्था च ॥७०॥

सांख्यदर्शने समाप्तः षष्ठोऽध्यायः स्वामिब्रह्ममुनिभाष्योपेतः ।

समाप्तं चेदं सांख्यदर्शनं ब्रह्ममुनिभाष्योपेतम् ॥

इति

—::❀::—

महतोऽन्यत् ॥६६॥

( अन्यत्-महतः ) कार्यसिद्धेः कर्मप्रवृत्तेरन्यत् खलु मुक्तिर्भोगानुभूतिर्महत्तत्त्वस्य बुद्धिरूपस्यान्तःकरणस्य कार्यं तद्द्वारा भोगानुभूतिं करोति जीवः, बुद्धिसत्त्वोपारूढा हि सर्वे भोगा इति च प्रसिद्धिः। यतो हि "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) भोगं तु बुद्धिसत्त्वेनानुतिष्ठति तदभावे भोगाभावोऽथ विमुक्तिरित्यप्यनुसन्धेयम् ॥६६॥

अथ महत्तत्त्वानन्तरं प्रकृतेः पुरुषेण सह सम्बन्धः कथम्भूत इत्युच्यते--

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥६७॥

(प्रकृतेः स्वस्वामिभावः-अपि बीजाङ्कुरवत्-अनादिः कर्मनिमित्तः) प्रकृतेः पुरुषेण सह 'पुरुषेण' इति लभ्यतेऽर्थात् प्रस्तुतपुरुषप्रकरणात् 'प्रकृतेः' षष्ठीसम्बन्धाच्च। प्रकृतेः पुरुषेण सह स्वस्वामिभावसम्बन्धः, प्रकृतिस्तु स्वं पुरुषस्याथ पुरुषः स्वामी तस्याः। स एष प्रकृतिपुरुषयोः स्वस्वामिसम्बन्धोऽपि बीजाङ्कुरवत् प्रवाहरूपेणानादिरस्ति, यथा बीजाङ्कुरयोः सम्बन्धः प्रवाहेण प्रवर्तते सति बीजेऽङ्कुरः सत्यङ्कुरे पुनर्बीजं तथैव सति स्वे स्वामी सति स्वामिनि स्वं भवति। स एष प्रकृतिपुरुषयोः स्वस्वामिभावः कर्मनिमित्तोऽस्ति न स्वाभाविको नित्यो वा कर्मशब्दादत्र धर्माधर्मसंस्काराऽभिप्रेतः। कर्मक्षये स्वस्वामिसम्बन्धाभावस्तदभावात् खलु मोक्ष इत्यप्यनुसन्धेयम् ॥६७॥

तत्र पञ्चशिखमतमाह—

अविवेकनिमित्तको * वा पञ्चशिखः ॥६८॥

( वा ) अथवा ( अविवेकनिमित्तकः ) अविवेकहेतुको भवतु प्रकृतेः स प्रकृतिपुरुषयोः स्वस्वामिभावसम्बन्धः ( पञ्चशिखः ) तथाह्याह पञ्चशिखः। अत्र वाकारः पूर्वापेक्षया वैशिष्ट्यप्रदर्शनाय, पञ्चशिख इति प्रमाणप्रदर्शनम् ॥६८॥

मतान्तरमाह--

लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥६९॥

( लिङ्गशरीरनिमित्तकः ) स एव प्रकृतिपुरुषयोः स्वस्वामिभावो

* 'अविवेकनिमित्तकः, पाठोऽनिरुद्धस्य 'अविवेकनिमित्तः' विज्ञानभिक्षोः

लिङ्गशरीरनिमित्तकोऽस्ति । लिङ्गशरीरेणात्र स्थूलशरीरधारणाय या वासनाशक्तिः सा गृह्यत इत्युत्प्रेक्षा (इति सनन्दनाचार्यः) इत्थं सनन्दनाचार्यो मन्यते ॥६६॥

इत्थं प्रकृतिपुरुषयोः स्वस्वामिभावे सति स्वामी पुरुषः स्वभूतां प्रकृतिं यदा पश्यति तदा तदन्तरे 'पुरुषान्तरे' भोगप्रवृत्तिरुपजायतेऽत एव स महत्तत्त्वेन बुद्ध्या युज्यते यथोक्तम् "महतोऽन्यत्" [ ६६ ] पश्चाद् भोगार्थचेष्टनायाहङ्कारमादत्ते चेष्टनं कर्मप्रादुर्भावो भवति ह्यहङ्कारसाधनेन, उक्तं हि "अहङ्कारकर्त्रधीना कार्यसिद्धिः" [ ६४ ] पुनः कार्यसाधनायेन्द्रियाण्यधितिष्ठति, इन्द्रियाण्यधिष्ठातु' शरीरे प्रविशति, शरीरे प्रविश्य तैरिन्द्रियैर्विषयान् परिधावति पुनस्त्रिविधानि दुःखान्यनुभवतीति स्वस्वामिभावस्य परिणामः । तस्मात्—

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥७०॥

( यत्-वा-तत्-वा तदुच्छित्तिः पुरुषार्थः-तदुच्छित्तिः पुरुषार्थः ) यत्तत्किमपि निमित्तं भवतु प्रकृतिपुरुषयोः स्वस्वामिसम्बन्धस्य तदुच्छेदस्तन्नाशः पुरुषार्थः पुरुषस्वरूपलाभः "असङ्गो ह्ययं पुरुषः" ( बृह० ४।३।१५ ) आत्यन्तिकदुःखनिवृत्तिरूपो मोक्षो ब्रह्मसम्पत्त्यात्मकः प्रसादो भावनीयः सम्पादनीयः। अन्ते द्विरुक्तिरध्यायसमाप्त्यर्था ग्रन्थसमाप्त्यर्था च ॥७०॥

सांख्यदर्शने समाप्तः षष्ठोऽध्यायः स्वामिब्रह्ममुनिभाष्योपेतः ।

समाप्तं चेदं सांख्यदर्शनं ब्रह्ममुनिभाष्योपेतम् ॥

इति

—::※::—

# वर्णानुक्रमेण सूत्रसूचिः

## शुद्धाशुद्धपत्रम्

| पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १ | १४ | सधानात् | साधनात् | ४४ | १५ | गृह्यते | गृह्यते |
| ३ | १७ | विधिरूप- | विधिरुप- | ५८ | ६ | द्रष्टत्वा | द्रष्टृत्वा |
| ४ | ३० | ततो तां विमो | ततो विमो | ६५ | १३ | कुवता | कुर्वता |
| ८ | ५ | वस्त्वंस्तुभ्यां | वस्त्ववस्तुभ्यां | ६६ | १ | प्रतिभान्ति | प्रतिभाति |
| ८ | २१ | वस्त्वस्तुवि- | वस्त्ववस्तुवि- | ६७ | १ | ॥ | तरणिवत् ॥ |
| १२ | २४ | तस्यविद्यमा- | तस्याविद्यमा- | ७७ | ४ | जीवात्कर्म | जीवात्मकर्म |
| १७ | २६ | प्रत्यक्षाणां | प्रत्यक्षाप्रत्यक्षाणां | ८३ | ९ | सङ्गत्वात् | ससङ्गत्वात् |
| १८ | २३ | तश्च | तैश्च | ९० | १७ | दाढर्याय | दार्ढ्याय |
| २० | ११ | तथाथविधा | तथार्थविधा | ९० | १७ | दार्ढयाय | दार्ढ्याय |
| ,, | २० | द्वकाराणां | द्विकाराणां | ९३ | ६ | नम्रता | नम्रतां |
| २५ | २७ | अतः | अत्र | १०८ | ३ | शकालमन | शकालावन |
| २६ | १ | द्वारप्राप्तं | द्वाराप्राप्तं | ११२ | १३ | प्रसक्तेः | प्रसक्तिः |
| २६ | १५ | अबाह्यं लो | अबाह्यमलो | ,, | १५ | ,, | ,, |
| ,, | १८ | प्रत्यक्षनिति | प्रत्यक्षमिति | १२५ | ५ | अण्वो | अण्व्यो |
| २८ | १३ | योरन्तरा | योरन्यतरा | [illegible] | [illegible] | दङ्कुर- | दङ्कुर |
| २९ | १६ | च इति | चेति | १३३ | २५ | सृष्टामवथु | सृष्टावमैथु |
| ३० | २० | [illegible] | अनुमानम्) | १३६ | २८ | बी[illegible]त्व | सबीजत्व |
| ३० | २६ | सामामन्यवि | सामान्याव | १३७ | १८ | या[illegible]वान् | योगवान् |
| ३१ | २३ | प्रमाणसिद्धौ | पुरुषसिद्धौ | [illegible] | [illegible] | [illegible]यदर्शनात् | कार्यदर्शनात् |
| ३४ | ४ | योरुपलब्धिः | [illegible]लब्धि | १५३ | १८ | सत्त्वदीना | सत्त्वादीना |
| [illegible] | [illegible] | [illegible] | अवतारितः | १५५ | २१ | यातबद्धः | [illegible]ति बद्धः |
| [illegible] | [illegible] | [illegible] | त[illegible] | [illegible] | [illegible] | [illegible] | यथेन्द्रिय |
| [illegible] | [illegible] | [illegible] | व्यपदेशान | १५२ | १७ | [illegible] | कार्यदर्शनात् |





लेखक की दर्शनविषयक एक और अनुपम पुस्तक पर निम्न सम्मतियां—

## वेदान्तदर्शनं ब्रह्ममुनिभाष्योपेतम्+

१—श्रीयुत महामहोपाध्याय पं० नारायण शास्त्री खिस्ते साहित्याचार्य भूतपूर्व प्रिंसिपल ग० संस्कृत कालेज बनारस की सम्मति—

"भवत्सङ्कलितं वेदान्तदर्शनं मयाऽऽमूलचूलं सम्यग्दृष्टम्। रुचिरा भवतां सङ्कलनशैली सरला भाषा सुगमा पद्धतिश्च बाढमाकर्षति चेतः। विचारधारा च प्रायो नवीनेव, श्रीमदाचार्यभगवत्पादशङ्कराचार्याणां भाष्ये बहवो विकल्पा उट्टङ्किता भवद्भिः। एतादृशनवीनशैलीविचारवतामवश्यमुपादेय उपकारकश्च ग्रन्थोऽयमिति मे सम्मतिः। प्राचीनविचारानुगा अपि यदि ग्रन्थमिममालोचयेयुः प्रतियोगिविधया, तदा तेषामपि स्वमतदार्ढ्यप्रयत्नाय ग्रन्थोऽयमुपयुक्तो भवेदिति मन्ये।"

ना० शा० खिस्ते—शर्मणः

२—आर्यजगत् के प्रसिद्ध दार्शनिक विद्वान् श्रीयुत स्वामी आत्मानन्द जी महाराज आचार्य की सम्मति—

"आपने भाष्य में त्रैतवाद का प्रतिपादन सूत्रों के आधार पर ही किया है। शाङ्करभाष्य की समालोचना भी व्याससूत्रों और आर्षग्रन्थों के आधार पर ही की है। मैंने इस भाष्य को आद्योपान्त पढ़ा है, मुझे यह लिखने में कोई सङ्कोच नहीं कि आप अपने सिद्धान्त-स्पष्टीकरण में सर्वथा सफल हुए हैं।"

आत्मानन्द सरस्वती

पुस्तक मिलने का पता—

**सार्वदेशिक आर्यप्रतिनिधिसभा श्रद्धानन्द बलिदान भवन देहली**

---

+यह पुस्तक उत्तरप्रदेश राज्य से पुरस्कृत है।